शेषादेशयोर्द्वित्वमनादौ । ( २८ ) ह्रस्य ठ. । ( ७ ) वर्गेषु युजः पूर्वः । ( ५९ ) उदूतो मधूकादिषु ।

## अः क्ष्माश्लाघयोः ॥ ६३ ॥

क्ष्मा श्लाघा इत्येतयोर्युक्तस्य विप्रकर्षो भवति, पूर्वस्य अकारस्तत्स्वरता च भवति । खमा ( ३-२९ क्ष् = ख्, शे० स्प० ) । सलाहा ( २-४३ श् = स्, विप्रकर्षः पूर्वस्याऽत्वं, तत्स्वरता च, २-२७ घ्=ह् ) ॥ ६३ ॥

अ क्ष्माश्लाघयो —एतयोर्युक्तस्य विकर्ष स्यात्, पूर्वस्य चाकार । खमा । सलाहा । 'वा विकर्षो विपर्यासो दीर्घेऽप्यत्व च पूर्ववत्' । दिहरो, दीहो ॥ ६३ ॥

क्ष्मा और श्लाघा शब्द में विकर्ष और पूर्व में अकार योग । ( क्ष्मा ) विकर्ष अकार का योग । ३४ से क्ष को ख आदेश । खमा । ( श्लाघा ) २६ से श को स । २३ से घ को हकार । सकार-लकार का विकर्ष, अकार का योग । सलाहा । 'दीर्घ'-शब्द में भी विकल्प से विकर्ष, अकार का योग और वर्णव्यत्यय हो । ( दीर्घ ) विकल्प से विकर्ष और अकार का योग होने से 'दीरघ' हुआ, वर्णव्यत्यय होने से दीघर हुआ । २३ से घ को ह आदेश । वार्तिक में चकारग्रहण से अथवा ३६ से ईकार को इकार । दिहरो । पक्ष में-५ से रेफलोप । २३ से हकार । दीहो ॥ ६३ ॥

## स्नेहे वा ॥ ६४ ॥

स्नेहशब्दे युक्तस्य विप्रकर्षो वा भवति, पूर्वस्य च अकारस्तत्स्वरता च भवति । सणेहो ( पूर्ववत् विप्रकर्षादिकं, २-४२ न् = ण्, ५-१ ओ ) । णेहो ( ३-१ स्० स्प० ) ॥ ६४ ॥

स्नेहे वा—अत्र युक्तस्य विकर्षो वा भवति, पूर्वस्य च इकार । सिणेहो । क्वचित्पूर्वस्य चाकार, तदा-सणेहो, णेहो ॥ ६४ ॥

स्नेह-शब्द में विकल्प से विकर्ष और पूर्व को अकार । ( स्नेह ) २५ से णकार । सणेहो । पक्ष में-३ से सलोप । २५ से ण । णेहो । किसी मत से इकार का पूर्व वर्ण के साथ योग होता है, तब-सिणेहो होगा । सूत्र में 'स्निह'शब्द का ग्रहण नहीं करना, किन्तु प्रधानतया धात्वर्थ लेना । अत' 'स्निग्ध.' यहाँ स्निह धातु से क्त प्रत्यय के योग होने पर भी हो जायगा । ( स्निग्ध ) ३ से गकार का लोप । ६ से धद्वित्व । ७ से द । २५ से णकार । सिणिद्धो । पक्ष में-पूर्ववत् । णिद्धो ॥ ६४ ॥

नोट- मं ( ३४ ) ष्कस्कक्षां ख. । ( २३ ) खघथधभां हः । ( ३६ ) इदीत' पानीयादिषु । ( ५ ) सर्वत्र लवराम् । ( २५ ) नो ण. सर्वत्र । ( ३ ) उपरि लोपः कगडतदपषसाम् । (६) शेषादेशयोर्द्वित्वमनादौ । (७) वर्गेषु युजः पूर्वं ।

## उः पद्मतन्वीसमेषु ॥ ६५ ॥

पद्मशब्दे तन्वी-इत्येवं समेषु च युक्तस्य विप्रकर्षो भवति, पूर्वस्य च उकारस्तत्स्वरता च भवति । पउमं[1] ( ३-२ द्लोपः, शे० स्प० ) । तणुई

१ ओत्पद्मे ८ । १ । ६१ । तेन, पोम्मं । हे० ।

(२-४२ न् = ण्, उत्वादिपू०, वलोपश्च)। लहुई (२-२७ घ=ह, शे० पू०)। तन्वी। लघ्वी ॥ ६५ ॥

उः पद्मतन्वीसमेषु—पद्मतुल्येषु तन्वीसदृशेषु च युक्तस्य विकर्षः स्यात् पूर्वस्य च उकारः। 'पद्मघस्मरकश्मीरवेश्मसद्माग्नरादयः। समाना पद्मशब्दस्य प्राकृतज्ञैः प्रकीर्तिताः' ॥ पउम। घसुमरो। कसुमीरो। वेसुम। सउम। अउमरो। 'तन्वी लघ्वी तथाऽशिश्वी मृद्वी पट्वी तथैव च। बह्वी गुर्वी च पृथ्वी च तन्वीतुल्याः स्युरीदृशाः' ॥' तणुई। लहुई। असिसुई। मउई। पडुई। बहुई। गरुई। पुहुई ॥ ६५ ॥

पद्म तथा तन्वी के समान शब्दों में युक्त वर्ण का विकर्ष और पूर्व में उकार हो। पद्म, घस्मर-इत्यादिक पद्म-सदृश हैं और तन्वी, लघ्वी, अशिश्वी-इत्यादिक तन्वी-सदृश हैं। (पद्मम्) दकार मकार का विश्लेष। उकारागम। २ से दलोप। पउमं। (घस्मरः) विकर्ष, उकार। घसुमरो। (कश्मीरः) २६ से श को सकार। कसुमीरो। मतान्तर से स्त्रीलिङ्गप्राकृतत्वात् बहुवचन। कसुमीरा'। (वेश्म) वेसुमं। (सद्म) विकर्ष, उकारागम। २ से दलोप। सउम। (अग्नरः) अउमरो। ये पद्मसदृश दिखावे। तथा प्रचलित प्रयोगानुसार अन्य भी जानना। द्वार शब्द में दकार और वकार का विकल्प से लोप, उकार हो। (द्वारम्) वार, दार, दुआरं। तन्वी इत्यादि में विकर्ष, उकार। (तन्वी) २५ से णकार। २ से वलोप। तणुई। (लघ्वी) २३ से घ को ह। लहुई। (अशिश्वी) २६ से दोनों श को स। २ से वलोप। असिसुई। (मृद्वी) ९ से ऋ को अकार। मउई। (पट्वी) पडुई। १९ से ट को ड। (बह्वी) बहुई। (गुर्वी) 'अन्मुकुटादिषु' से अकार। गरुई। (पृथ्वी) १० से ऋ को इकार, पिहुई। मतान्तर से ११ से उ। पुहुई ॥ ६५ ॥

## ज्यायामीत् ॥ ६६ ॥

इति वररुचिविरचिते प्राकृतप्रकाशे तृतीयः परिच्छेदः ॥

ज्याशब्दे युक्तस्य विप्रकर्षो भवति पूर्वस्य च ईकारस्तत्स्वरता च। जीआ (२-२ यलोपः)[1] ॥ ६६ ॥

इति भामहविरचिते प्राकृतप्रकाशे युक्तवर्णविधिर्नाम तृतीयः परिच्छेदः ॥

ज्यायामीत्—ज्याशब्दे विकर्षः, पूर्वस्य चेकारः स्यात्। जीआ। जीवाशब्दादपि जीआ-इत्येव ॥ ६५ ॥

इति श्री म म मथुराप्रसादकृतौ चन्द्रिकाख्यव्याख्यायां युक्तवर्णविधिस्तृतीयः परिच्छेदः।

ज्याशब्द के युक्त वर्ण का विश्लेष करके ईकार हो। (ज्या) विश्लेष, ईकार। २ से य-लोप। जीआ। एवम्-जीवाशब्द का भी जीआ होगा। (जीवा) २ से वलोप। जीआ ॥ ६६ ॥

नोट—मं (२) कगचजतदपयवां प्रायो लोपः। (२६) शषोः सः। (९) ऋतोऽत्। (१९) टो डः। (१०) इदृष्यादिषु। (११) उदृत्वादिषु।

इति श्री म. म. मथुराप्रसादकृतौ प्राकृतप्रकाशस्य प्रदीपटीकायां तृतीयः परिच्छेदः।

---

१ क० पु० 'इवेव' ॥ ६७ ॥ इवशब्दे व इति निपात्यते। व्वाण व्व यव। क० पा०।

## अथ चतुर्थः परिच्छेदः

सन्धावचामज्लोपविशेषा[1] बहुलम् ॥ १ ॥

अचामिति प्रत्याहारग्रहणम्। अजिति च। सन्धौ वर्तमानानामचां स्थाने अज्विशेषा लोपविशेषाश्च बहुलं भवन्ति। अज्विशेषास्तावत्-जउणअडं, जउणाअडं (२-३ सूत्रे स्पष्टं जउणा, तटमिति २-२ त्लोपः[2], २-२० ट्=ड्, अत्र बहुलग्रहणात् 'णा' इत्यत्र ह्रस्वत्वं विकल्पेन, ५-३० सोर्बिन्दुः)। णइसोत्तो, णईसोत्तो (२-४२ न्=ण्, २-२ द्लोपः, ह्रस्वविकल्पः पू०, सोत्तो ३-५२ सूत्रे द्रष्टव्यः। अत्र विशेषः ४-१८ पुं०[3])। बहुमुहं, बहूमूहं (२-२७ ख्=ह्, ५-३० बिं०, शे० पू०)। कण्णउरं, कण्णऊरं (३-३ र्लोपः, ३-५० णद्वि०, २-१ प्लोपः, शे० पू०)। सिरोवेअणा, सिरवेअणा (२-४३ श्=स्, ४-६ स्लोपे अज्विशेष ओ=सिरो इति, वेअणा १-३४ सू० स्प०, शे० पू०)। पीआपीअं, पिआपिअं। सीआसीअं, सिआसिअं (२-२ त्लोपः, शेषं ह्रस्वविकल्पादि पूर्व०)। सवोमुओ (३-३ र्लोपः, ओत्वमकारस्य, २-२७ ख्=ह्, ५-१ ओ)। सवोमूओ (३-३ र्लोपः, २-१५ प्=व्, ओत्वमूत्वे बाहुलकात्, शे० पू०)। सरोरुहं, सररुहं (४-६ स्लोपः, ओत्वविकल्पः, शे० स्प०)। लोपविशेषाः-राउलं, राअउलं (अलोपे विकल्पेनाऽलोपः, २-२ क्लोपः, ५-३० बिं०)। तुहउं, तुहअउं (६-३१ तव=तुह, विकल्पेन बाहुलकादकारलोपे, ३-३ रकारलोपः, ५-३० बिं०)। महउं, महअउं (६-५० मम=मह, शे० पू०)। वावडणं, वाअवडणं (२-१५ प्=व्, २-२ वलोपे बाहुलकाद् विकल्पेन अकारलोपे वापतनमिति जाते, पुनः २-१५ प=व्, वावतन इति जाते, ८-५१ त्=ड्, २-४२ न्=ण्, ५-३० बिं०, अलोपाभावे स्पष्टम्)। कुम्भारो, कुम्भआरो (अनादिग्रहणात् २-२ क्लोपो न, ४-१७ वर्गान्त०, २-२ कलोपे, ४-१ अकारोत्तरवर्त्यकारलोपे, ५-१ ओ, अलोपाभावे स्पष्टम्)। पवणुद्धअं, पवणउद्धअं (प्राय इति वलोपो न, २-४२ न्=ण्, पूर्ववदकारलोपः, पवण् उद्धतमिति जाते, २-२ त्लोपः, ५-३० बिं०, अलोपाभावे पूर्व०)। यमुनातटं, नदीस्रोतस्, बहुमुखं, कर्णपूरं, शिरोवेदना,

---

१ अयं पाठः का० पु० सम्मत। इतः प्राचीनेषु अजकपविशेषा इति पाठः।

२ वृत्तावधमनादिरेव गृह्यते। ३ ३-५२ सूत्रे तु व्यत्ययेन नपुंसकत्वम्।

**पीतापीतं, सीतासीतं ( शीताशीतं ), सर्वमुखः ( सर्पमुखः ), सरोरुहं, राजकुलं, तवार्द्धं, ममार्द्धं, पादपतनं, कुम्भकारः, पवनोद्धतम्। संयोगपरे सर्वत्र पूर्वस्याचो लोपः, [ ह्रस्वश्च। यथा-णत्थि, सक्कुन्ती, णिक्कुन्तो, अत्तो-इत्यादयः ] ( ²स्पष्टाः )। क्वचिन्नित्यं, क्वचिदन्यदेव बहुलग्रहणात्। तेनान्यदपि लाक्षणिकं कार्यं भवति॥ १॥**

सन्धावचामज्लोपविशेषा बहुलम्—अचां सन्धौ कर्तव्ये अच्-विशेषो लोप-विशेषश्च बहुलं स्यात्। बहुलग्रहणात् विभिन्नानि कार्याणि भवन्ति।

क्वचित्प्रवृत्ति, क्वचिदप्रवृत्ति', क्वचिद् विभाषा, क्वचिदन्यदेव।
विधेर्विधान बहुधा समीक्ष्य चतुर्विध बाहुलकं वदन्ति॥ १॥

तत्र महाकविप्रयोगानुसारेण लोकव्यवहृतशब्दानुसारेण च संस्कृतशब्देषु स्वयं कल्पनीयम्। यतो हि पाणिनीयानां छायावाहीनि खलु प्राकृतसूत्राणि। अचां सन्धौ अज्-विशेषास्तावत्-राएसी, राअइसी। वासेसी, वासइसी। कण्णेरो, कण्णऊरो। चक्काओ, चक्कवाओ। कुंभारो, कुंभआरो। अंधारो, अंधआरो। ममवि, ममावि। केणवि, केणावि। क्वचिद्दीर्घविकल्प -वारीमई, वारिमई। वईमूलं, वइमूलं। वेणूवणं, वेणुवणं। क्वचिद्वा ह्रस्व -जउणअडं, जउणाअडं। णइसोत्तो, णईसोत्तो। बहुमुहं, बहू-मुह। क्वचिद्वा ओकारस्य अत्वम्-सररुह, सरोरुहं। मणहर, मणोहरं। सिरविअणा, सिरोविअणा। क्वचिन्नैव ओकारस्य अत्वम्-मणोरहो। मणोहओ। अथ लोपविशेषा— क्वचित् पूर्वपदान्तस्य अकारस्य वा लोप'। राउल, राअउलं। पापडण, पाअपडणं। पापीढ, पाअपीढ। क्वचिद् हल्परत्वेऽपि अचो नित्यमादिलोप'-एत्थ, त्थ। तुम्हे त्थ, अम्हे त्थ। बम्हणो त्थ चिट्ठइ। प्रायः एङ परत्वे एव एवं लोप.। नेह—हरी एत्थ चिट्ठइ। अच्परत्वेऽपि क्वचिन्नित्य लोप'। राईदो। मइदो। उविंदो। दीहुअओ। मअरद्धुआण। पमद्धुआण। महूसवो। तुह त्ति। मह त्ति। गओ त्ति। सुओ त्ति। इओ त्ति। क्वचिद् यष्टिशब्दस्य वा लकारलोप'। चम्मट्ठी। चम्मलट्ठी। क्वचिन्न-असिलट्ठी। बहुलग्रहणात् क्वचिन्न सन्धि.। मुहअंदो। परिअरो। उवआरो। पईवो। तुराआरो। पिआली-इत्यादि। परोप्परं। अन्तेउर। तेरह। तेवीस। तेत्तीसा। पुणो, पुणा, पुण-इत्यादि॥ १॥

अचों की सन्धि होने पर कहीं दोनों अच् मिलकर अज्-विशेष अर्थात् तीसरा ही अच् ( स्वर ) हो जाता है। सूत्र में अज्लोप० पाठ है, वह 'चर्मयष्टि' में यकारलोप के ग्रहणार्थ है। अट्-प्रत्याहार में अच् आ जाते हैं। विभिन्न प्रकार के आदेश आदि बहुलपदग्रहण से जानना। क्योंकि बहुलपद का अर्थ ही यह है कि 'कहीं सूत्र की उचित प्रकार से प्रवृत्ति हो और कहीं सूत्र प्रवृत्त होते हुए भी अप्रवृत्त रहे, अर्थात् कुछ भी कार्य न करे। कहीं विकल्प और कहीं अन्य ही कार्य कर दे'। इस तरह अनेक कार्यों के करने का प्रकार विचार कर चार प्रकार का बहुल-जन्य कार्य जाना

१ [ ] एतत्कोष्ठकान्तर्गतः पाठो न सार्वत्रिक.। २. एष पाठः संजीवन्यादिसंमतः।

है। इन चार प्रकारों में सबका अन्तर्भाव हो जाता है। यह बहुल अन्य कार्य महाकवियों के प्रयोग से अथवा लोक-व्यवहृत-शब्दानुसार संस्कृत शब्दों में स्वयं कल्पना कर लेना। क्योंकि प्राकृतसूत्र पाणिनीय प्रयोगों का ही अनुसरण करते हैं।

अच्-विशेष—(राज ऋषिः) २ से जलोप। १० से इकार। २६ से ष को स। अ + इ मिलकर एकार। राएसी। पक्ष में–राअइसी। (व्यास ऋषिः) ४ से यलोप। वासेसी, वासइसी। (कर्णपूर) ५ से रेफलोप। ६ से द्वित्व। २ से पलोप। अ + ऊ मिल कर एकार। कण्णेरो, कण्णऊरो। पूर्ववत्–(चक्रवाकः) चक्काओ, प्रायग्रहण से वलोप। नहीं तो चक्कवाओ। एवम्, (कुम्भकार) कुंभारो, कुंभआरो। (अन्धकारः) अंधारो, अंधआरो। (मम अपि) पूर्व के साथ दीर्घ। ममावि। अकार का लोप, ममवि। १८ से प को व। एवम्—(केन अपि) २५ से न को ण। केणावि, केणवि। कहीं पूर्व स्वर को विकल्प से दीर्घ हो। (वारिमयी) ४ से यलोप, वारीमई। पक्ष में वारिमई। एवम्—(वृत्तिमूलम्) ३ से दोनों तकारों का लोप। ९ से ऋ को अकार। ३५ प्रकृत से विकल्प से इकार को दीर्घ। वईमूल, वइमूलं। अथवा (वृत्तिमूलम्) का पूर्ववत् साधुत्व। (वेणुवनम्) २५ से न को ण। विकल्प से दीर्घ। वेणूवणं, वेणुवणं। कहीं पर विकल्प से ह्रस्व होगा। (यमुनातटम्) २४ से य को ज। 'यमुनायां यस्य' से मकारलोप। २५ से न को ण। २ से तकारलोप। १९ से ट को ड। ३५ से विकल्प से ह्रस्व। जउणअड। जउणाअड। एवम् (नदीस्रोतः) ५ से रेफलोप। ४१ से तद्वित्व। ३५ से विकल्प से ह्रस्व। णइसोत्तो, णईसोत्तो। (वधूमुखम्) २३ से ध और ख को हकार। ३५ से विकल्प से ह्रस्व। बहुमुह, बहूमुह। कहीं ओकार को विकल्प से अकार। (सरोरुहम्) सररुह, सरोरुहं। (मनोहरम्) मणहरं, मणोहरं। (शिरोवेदना) सकार, दलोप, ण आदेश पूर्ववत्। 'एत इद०' (१+३५) से ए को इकार। प्रकृत सूत्र से ओ को अकार। सिरविअणा, सिरोविअणा। कहीं ओकार को अकारादेश नहीं होगा। (मनोरथः) मणोरहो। (मनोभवः) मणोहओ। उक्त सूत्र से हकार।

लोपविशेष—कहीं पदान्तस्थ पूर्व अकार का विकल्प से लोप हो। (राजकुलम्) २ से ज और क का लोप। प्रकृत से अकार का लोप। राउलं। राअउलं। (पाद पतनम्) पापडणं, पाअपडणं। (पादपीठम्) 'ठो ढ.' से ठ को ढ। पापीढ, पाअपीढ। कहीं हल् पर होने पर भी, आदिस्थ अच् का नित्य लोप हो। एत्थ के एकार का लोप होगा। तुम्हे, अम्हे का साधुत्व षष्ठमपरिच्छेद में है। (यूयमत्र) तुम्हे एत्थ, तुम्हेत्थ। अम्हे एत्थ, अम्हेत्थ। (ब्राह्मणः + अत्र) बम्हणोत्थ। प्रायः एङ् से पर अकार का लोप होता है। यहाँ नहीं होगा–(हरिः + अत्र) हरी एत्थ। कहीं अच् परे होने पर भी नित्य अकार का लोप होता है। (गज + इन्द्रः) २ से जलोप। ५ से रेफलोप। नित्य अकार का लोप। गइंदो। (मृग + इन्द्रः) ९ से ऋ को अकार। पूर्ववत् रेफ-गकार का लोप। नित्य अकार का लोप। मइन्दो। (उप + इन्द्रः) १८ से प को व। अलोप। उविंदो। (दीप + उज्ज्वलः) ५ से व लोप। ६ से जद्वित्व। प को व। अकारलोप। दीवुज्जलो। (मकरंद + उद्यानम्) २ से कलोप। ३२ से द्य को ज आदेश। ६ से द्वित्व। अकारलोप। मअरंदुज्जाणं। (प्रमदा + उद्यानम्) ५ से रेफलोप। अन्य कार्य पूर्ववत्। पमदुज्जाणं। (महा + उत्सवः) आकारलोप। महूसवो। उत्सवशब्द के

उकार को 'इदूतौ' वार्तिक की इष्टि से ऊकार। (तव+इति) तुह इति, प्रकृत सूत्र से इकारलोप। ४१ तकारद्वित्व। तुहत्ति। (मम इति) मह इति। महत्ति। (गतः इति) गओत्ति। (श्रुत. इति) सुओत्ति। (दयितः इति) दइओत्ति। २+५+२१ से रूपसिद्धि हो जायगी। ४२ से सर्वत्र ओकार। कहीं पर यष्टि शब्द के लकार का विकल्प से लोप हो। (चर्मयष्टिः) ५ से रेफलोप। ६ से द्वित्व। 'यष्ट्यां लः' २+२९ से लकार। २८ से ठ। ६ से द्वित्व। ७ से टकार। विकल्प से प्रकृत सूत्र से लकार का लोप। चम्मट्ठी, चम्मलट्ठी। कहीं यष्टि के लकार का लोप नहीं होगा। जैसे—(असियष्टिः) असिलट्ठी। कहीं पर बहुल ग्रहण से सन्धि ही न होगी। (मुखचन्द्रः) मुहअदो। (परिकरः) परिअरो। (उपकारः) उवआरो। (प्रदीपः) पईवो। (दुराचारः) दुराआरो। (विकालः) विआलो। सर्वत्र पूर्वोक्त (२३+२+५+१८) नम्बर के सूत्रों से सिद्धि जानना। (परस्परम्) इत्यादिक शब्दों में कहीं सकार का और कहीं पकार का लोप होता है। तो परस्पर शब्द के सकार का लोप। ६ से पकारद्वित्व। ३५ प्रकृत सूत्र से ओकार। परोप्परं। (अन्तः पुरम्) २ से पकार का लोप। प्रकृत सूत्र से विसर्गसहित अकार को एकार। अन्तेउरं। (त्रयोदश) तेरह। (२+१४) द्वितीय अध्याय चौदहवें सूत्र में साधुत्व है। (त्रयोविंशति) ५ से रेफलोप। 'मांसादिषु' (४+१६) सूत्र से अनुस्वार का लोप। 'आदीदूतौ' से ईकार। ३१ से एकार। ३५ प्रकृत सूत्र से ति को आकार। तेवीसा। (त्रयस्त्रिंशत्) ५ से रेफलोप। ३१ से एकार। 'मांसादि' से अनुस्वारलोप। ३५ प्रकृत सूत्र में 'लोपः साचो यकारस्य' से यकार का लोप। 'आदीदूतौ' वार्तिक से ति के इकार को ईकार। ६ से 'त्रिंशत्' के तकार को द्वित्व। 'तेत्तीशत्' इस अवस्था में २६ से श को स आदेश। ६० से तकार का लोप। 'स्त्रियामात्' से आकार। तेत्तीसा। कहीं एक पद में भी भिन्न-भिन्न आदेश होते हैं। (पुनः) २५ से न को ण आदेश। प्रकृत सूत्र से कहीं ओकार, पुणो। कहीं आकार, पुणा। कहीं विसर्ग का लोप, पुण। ये सब आदेश बहुल-ग्रहण से कल्पना कर लेना। तथा महाकविप्रयुक्त अथवा लोकव्यवहृत शब्दों में संस्कृतानुगामी शब्द की कल्पना करके आदेश विशेष की कल्पना कर लेना। क्योंकि समस्त प्राकृत वाङ्मय के संस्कृत शब्द ही जनक अथवा माता हैं। म्लेच्छादिक देशों में स्वरूप अधिक बिगड़ गया है। परन्तु वे भी संस्कृत शब्द से जन्य हैं। इति ॥१॥

नोट—नं० (२) कगचजतदपयवां प्रायो लोपः। (१०) इदुत्यादिषु। (२६) शषोः सः। (४) अधो मनयाम्। (५) सर्वत्र लवराम्। (६) शेषादेशयोर्द्वित्वमनादौ। (१८) पो वः। (२५) नो णः सर्वत्र। (९) अतोऽत्। (३५) सन्धावचामज्लोपविशेषा बहुलम्। (२४) आदेर्यो जः। (१९) टो डः। (३१) नीडादिषु। (२३) खघथधभां हः। (३२) ष्टस्य ठः। (४२) अत ओत् सोः। (२८) ष्टस्य ठः। (७) वर्गेषु युजः पूर्वः। (३१) ए शय्यादिषु। (६०) अन्त्यस्य हलः।

## उदुम्बरे दोर्लोपः ॥ २ ॥

उदुम्बरशब्दे दु इत्येतस्य लोपो भवति। उम्बरं (४-१७ वर्गान्त्यः, ५-३० सोर्बिन्दुः) ॥ २ ॥

उदुम्बरे दोर्वा[1] लोपः—उदुम्बरशब्दे दु इत्यस्य वा लोपः स्यात् । उम्बरं । उउम्बर ॥ २ ॥

( उदुम्बर इति ) । उदुम्बरशब्द में 'दु' का विकल्प से लोप हो । ( उदुम्बरम् ) दु का लोप हो जाने से उम्बर । पक्ष में–२ से दकार का लोप हो जाने से उउम्बरं ॥२॥

## कालायसे यस्य वा ॥ ३ ॥

**कालायसशब्दे यस्य वा लोपो भवति । कालासं, कालाअसं । ( स्प० ) ॥ ३ ॥**

कालायसे यस्य[2]—कालायसशब्दे साचो यकारस्य वा लोप स्यात् । कालास, कालाअस । 'लोप' साचो यकारस्य 'क्वचिन्नित्य क्वचिन्न वा' । तेत्तीसा । सहिओ, सहिअओ । किसलं, किसलअ । ओसो, ओआसो ( अवश्याय ) । कइव, कइवअ । सुहाइ, सुहाअइ । धूमाइ, धूमाअइ ॥ ३ ॥

( कालायसे इति ) । कालायसशब्द में अच्-सहित यकार का लोप हो । ( कालायसम् ) अकारसहित यकार का लोप हो गया । कालास । पक्ष में–२ से यलोप । कालाअस । कहीं पर अच्‌सहित यकार का नित्य लोप हो और कहीं नहीं हो अथवा हो, अर्थात् विकल्प से लोप हो । ( त्रयस्त्रिंशत् ) ५ से रेफलोप । 'लोप साचो यकारस्य' इससे अकार-विसर्ग-सहित यकारलोप । ३१ से एकार अथवा ३५ से अकार-विसर्ग-सहित को एकार । त्रिंशत् के रेफ का ५ से लोप, ६ से तद्द्वित्व । ३५ से अनुस्वार का लोप । २६ से श को स । ६० से अन्त्य हल् का लोप । ३६ से आकार । तेत्तीसा । ( सहृदयः ) विकल्प से यकारलोप । २ से दकारलोप । १० से ऋकार को इकार । ४२ से ओकार । सहिओ । पक्ष में–सहिअओ । ( किसलयम् ) यलोप । किसल । पक्षे—किसलअ । ( अवश्यायः ) 'ओदवापयोः' ( ४+२० ) से ओकार । 'लोपः साचो' से यलोप । ४ से श्या–गत यकार का लोप । 'सेवादिषु वा' (५ + ९) से ६ से प्राप्त द्वित्व का निषेध । २६ से श को सकार । पूर्ववत् ओकार । ओसो । पक्ष में-अवसाओ । पूर्ववत् श को स । यकारलोप । ( कतिपयम् ) १८ से प को वकार । २ से तकारलोप । उक्त से अच्-सहित यकार का लोप । कइव । पक्ष में–कइवअ । ( सुखायते ) २३ से ख को ह । यलोप । 'तत्तिपोरिदेतौ' इससे इकार । २ से तलोप । सुहाइ । पक्ष में–सुहाअइ । एवम्–( धूमायते ) धूमाइ, धूमाअइ ॥ ३ ॥

## भाजने जस्य ॥ ४ ॥

**भाजनशब्दे[3] जकारस्य लोपो वा भवति । भाणं, भाअणं ( २–४२ न् = ण, ५–३० बिं०, पक्षे २–२ सूत्रेण केवलजकारलोपो भवति ) ॥ ४ ॥**

भाजने जस्य—अत्र साचो जकारस्य वा लोप । भाणं, भाअणं ॥ ४ ॥

( भाजने इति ) । भाजनशब्द के जकार का विकल्प से लोप हो । २५ से न को ण । भाणं । पक्ष में–२ से जकार-लोप । भाअणं ॥ ४ ॥

---

१ वा–इति नास्ति भामहे । २. वा–इत्यधिकं भामहे ।

३ सस्वरस्य लोपो ज्ञेय । हेमस्तु ८ । १ । २६७ सूत्रे सस्वरस्येति पठत्येव ।

## यावदादिषु वस्य ॥ ५ ॥

यावदित्येवमादिषु [1]वकारस्य वा लोपो भवति । आ, आवता। ता, तावता। (२-३१ य् = ज् , ४-६ तलोपः, पक्षे-स्प०)। पाराओ, पारावओ (२-२ वृलोपः, ५-१ ओ, पक्षे-स्प०)। अणुत्तन्त, अणुवत्तन्त (२-४२ न् = ण् , वलोपे, ३-३ रलोपः, ३-५० वृद्धि, ७-१० मान = न्त, वलोपाभावे स्प०)। जीअं, जीविअं (२-२ तृलोपः, ५-३० बिं०, शे० स्पष्टम्)। एअं, एव्वं (३-५८ वद्वित्वं, ५-३० बिं०)। एअ, एव्व (३-५८ वृद्धि०)। कुअलअं, कुवलअं[2]। (विकल्पेन स्वररहितवलोपे २-२ यूलोपः, ५-३० बिं०)। यावत्, तावत्, पारावतः, अनुवर्तमानं, जीवितं, एवम्, एव, कुवलयम्–इत्येवमादयः ॥ ५ ॥

यावदादिषु वस्य—एषु साचो वकारस्य वा लोपः स्यात्। एषु सर्वत्र 'कगचजे'-त्यादिना लोपे सिद्धे साचो ग्रहणार्थं सूत्रचतुष्टयम्। या, याव। ता, ताव।

यावत्तावज्जीवितदेवकुलावर्तमानशब्दा ये।
प्रावरक एवमेव स्कन्धावारो यावदादयो ज्ञेयम् ॥ ५ ॥

यावदादिक-शब्दों में अच्-सहित वकार का लोप हो। ४० से तकारलोप। (यावत्) या। पक्ष में–याव। (तावत्) ता, ताव। (जीवितम्) २ से तलोप। जीअ, पक्ष में–जीविअ। (देवकुलम्) देउलं, देवउलं। (आवर्तः) वकार का लोप। ५८ से आकार को अकार। ३० से र्त को ट। ६ से द्वित्व। अट्टं। पक्ष में–आअट्टं। (प्रावारकः) ५ से रेफलोप। यावदादि से वा का लोप। २ से ककार का लोप। पारओ। पक्ष में–पाआरओ। (एवमेव) वलोप। एमेअ। पक्ष में–एअमेअ। (स्कन्धावार.) ३४ से 'स्क' को ख। खन्धारो। पक्ष में–खन्धाआरो। कई विद्वान् चक्रवाक शब्द को भी यावदादिगण में मानते हैं। (चक्रवाकः) चक्काओ। यह उदाहरण देते हैं। परन्तु चक्रवाक शब्द में आकार-सहित वकार का लोप करने पर 'चक्कओ' होगा। अतः (चक्रवाकः) २ से वलोप। ५ से रेफलोप। ६ से द्वित्व। 'सन्धावचां' ३५ से अकार को विकल्प से दीर्घ। चक्काओ। पक्ष में–चक्कवाओ ॥ ५ ॥

## अन्त्यहलः ॥ ६ ॥

वेति निवृत्तम्। शब्दानां योऽन्त्यो हल् तस्य लोपो भवति। जसो (२-३१ य् = ज् , २-४३ श् = स् , ४-१८ पुंस्त्वं, ५-१ ओ)। णहं (२-४२ न् = ण् , ४-१९ पुंस्त्वाभावः, ५-३० बिं०)। सरो (जसो-वत्)। कम्मो (३-३ रलोपः, ३-५० मद्वि०, शे० पू०)। जाव, ताव (४-५ सू० द्रष्टव्यम्)। यशः, नभः, सरः, कर्म, यावत्, तावत् ॥ ६ ॥

---

१. ससवरवलोपः, कश्चिद्वाकुलकारस्वररहितस्यापि। २. क० पु० चक्काओ, चक्कवाओ। देउलं, देवउलं। का० पा०।

अन्त्यस्य हलः—प्रादिपदिकसम्बन्धिनोऽन्त्यस्य, सुप्रत्ययसम्बन्धिनश्च हलो लोपः स्यात्। कम्मो। चम्मो। जसो। णमो। एसो। धणू। रमा। पाणी। धेणू। 'क्वापि लोपानुबन्धस्य बुधा वाञ्छन्त्यदन्तताम्'। सक्खिणो। पक्षे-सक्खी ॥ ६ ॥

प्रातिपदिकसञ्ज्ञक शब्द के अन्त्य हल् का तथा प्रातिपदिक से पर सु-प्रत्यय के हल् का लोप हो। ( कर्मन् ) ५ से रेफलोप। ६ से द्वित्व। प्रकृत से अन्त्य हल् नकार का लोप। 'नसन्तप्रावृट्०' ( ४। १८ ) से पुल्लिङ्ग। ४२ से ओकार। कम्मो। एवम्—चम्मो। ( यशस् ) अन्त्य सकार का लोप। २४ से यकार को जकार। २६ से श को स। पूर्ववत् पुल्लिङ्ग। जसो। ( नमस् ) २५ से न को ण। अन्य कार्य पूर्ववत्। णमो। ( धनुष् ) धणू। ( एषः ) 'तदेतदोः०' ( ५+६८ ) से तकार को सकार। अन्त्य का और सुप्रत्यय का लोप। ४२ से ओकार। एसो। ( रमा ) प्रातिपदिक से पर सु का लोप। रमा। ( पाणि ) पाणी। ( धेनु ) प्रातिपदिक से पर सु-प्रत्यय का लोप। ५२ से पाणि में इकार को धेनु में उकार को दीर्घ। धेणू। कहीं लोपानुबन्धी को अर्थात् हलन्त को विकल्प से अदन्त कर देते हैं। जैसे—( साक्षिन् ) नकारान्त का अदन्त हो गया। ३४ से क्ष को ख आदेश। ६ से द्वित्व। ७ से क। २५ से न को ण। ४२ से ओकार। ५८ से ह्रस्व। सक्खिणो। पक्ष में-सक्खी। साधुत्व पूर्ववत् ॥ ६ ॥

## स्त्रियामात् ॥ ७ ॥

स्त्रियां वर्त्तमानस्यान्त्यहल आकारो भवति। सरिआ ( स्पष्टम् )। पडिवआ ( १–२ सू० स्प० )। वाआ (स्प०)। सरित्, प्रतिपद्, वाक् ॥७॥

स्त्रियामात्—स्त्रिया प्रातिपदिकस्यान्त्यस्य हल आत्व स्यात्। सपआ। एआवआ। सरिआ। वाआ। एआवई ॥ ७ ॥

स्त्रीलिङ्ग में हलन्त प्रातिपदिक को आकार हो। ( संपत् ) त् को आकार हो गया। सपआ। ( सरित् ) सरिआ। ( वाच् ) वाआ। एतावत् शब्द में एतावती के स्थान पर 'एआवआ'-जो वसन्तराज जी ने माना है, वह अव्यवहार्य है। वस्तुत. जिन शब्दों में भागुरि के मत से हलन्त से आप् होता है वहीं आकारयुक्त है। क्या लिह्, गोदुह्, पुस् आदि में भी आकार होगा? कभी नहीं, वस्तुतः भागुरि प्रसिद्ध, काव्यादि में व्यवहृत शब्दों में आप् मानते हैं, अतः एतावती में आकार नहीं होगा, किंतु 'एआवई' होगा ॥ ७ ॥

नोट—न० (२) कगचजतदपयवां प्रायो लोप.। (५) सर्वत्र लवराम्। (३१) प्र शय्यादिषु। (३५) सन्धौ अज्लोपविशेषा बहुलम्। (६) शेषादेशयोर्द्वित्वमनादौ। (२६) शषो. स'। (६०) अन्त्यस्य हलः। (३६) स्त्रियामात्। (१०) इदृष्यादिषु। (४२) अत ओत् सोः। (४) अधो मनयाम्। (१८) पो वः। (२३) खघथधभां हः। (२५) नो णः सर्वत्र। (६०) अदातो यथादिषु वा। (३०) र्तस्य टः। (३४) ष्कस्कक्षां खः। (२४) आदेर्यो जः। (५२) सुभिसुप्सु दीर्घः। (७) वर्गेषु युजः पूर्वः।

## रो रा ॥ ८ ॥

१ सञ्जीवनीसम्मत पाठ।

स्त्रियामन्त्यस्य हलो रेफस्य रा इत्ययमादेशो भवति। धुरा, गिरा। (रूप०)॥ ८॥

रो रा—स्त्रियां वर्तमानस्य रेफान्तस्यान्त्यस्य रा भवति। गिरा। पुरा। धुरा। 'बहिःशब्दे हलोऽन्त्यस्य रेफादेशो विभाषया'। बाहिर। बही॥ ८॥

रेफान्त स्त्रीलिङ्ग शब्द के अन्त्य रेफ को रा हो। (गिर्) गिरा। (पुर्) पुरा। (धुर्) धुरा। बहिः शब्द में अन्त्य हल् रेफ को सस्वर रेफ विकल्प से हो। (बहिः) अन्त्य र् को सस्वर रेफ हो गया। ६७ से बकाराकार को आकार हो गया। बाहिरं। पक्ष में–६० से अन्त्यलोप। ५२ से दीर्घ। बही॥ ८॥

## न विद्युति॥ ९॥

विद्युच्छब्दे आकारो न भवति। विज्जू (३–२७ द्य्=ज्, ४–६ त्लोपः, ३–५० जद्वि०, ५–१८ दीर्घः)। विद्युत्॥ ९॥

न विद्युति[1]—विद्युति अन्त्यस्य हल आकारो न स्यात्। विज्जू॥ ९॥

विद्युत्-शब्द में अन्त्य हल् को आकार न हो। (विद्युत्) ३२ से द्य को जकारादेश। ६० से तकारलोप। ६ से जकारद्वित्व। ५२ से उकार को दीर्घ। विज्जू॥ ९॥

## (क्षुधो हः।)

क्षुधो हः[2]—क्षुधाशब्देऽन्त्यस्य ह स्यात्। छुहा। 'भागुरिमतेन प्रयोगानुसृत्या आपि कृते 'कगचजे'ति लोपे, 'खघथधे'ति हकारे, इयं सूत्रचतुष्टयी मन्दप्रयोजना॥

क्षुध्-शब्द के अन्त्य ध को ह हो। (क्षुध्) ध को ह आदेश। ६८ से छ-करादेश। छुहा। यदि भागुरिमतानुसार प्रयोगानुकूल हलन्त से आप्-प्रत्यय मान लें तो ये चारों सूत्र निष्प्रयोजन हैं। आ प्रत्यय करने पर वाचा आदि में २ से, छुहा में २३ से सर्व प्रयोग सिद्ध हो जायेंगे॥

## शरदो दः॥ १०॥

शरच्छब्दस्यान्त्यहलो दो भवति। सरदो[3] (२–४३ श्=स्, ४–१८ पुं०, ५–१ ओ)॥ १०॥

शरदोऽत्[4]—शरच्छब्देऽन्त्यस्य अ स्यात्। सरओ॥ १०॥

शरद् शब्द में अन्त्य द् को आकार हो। (शरद्) द को अकारादेश। 'वसन्त०' से पुँल्लिङ्ग। ४२ से ओकार। २६ से शकार को सकार। सरओ॥ १०॥

## दिक्प्रावृषोः सः॥ ११॥

दिक्छब्दस्यान्त्यहलः प्रावृट्शब्दस्यापि सकारो भवति। दिसा[5] (रूप०)। पाउसो (१–३० सू० रूप०)॥ ११॥

---

१. संजीवन्यां प्रथमं 'न विद्युति' इति सूत्रं, ततः 'रो रा' इति। एवं पाठक्रमोऽस्ति।
२ भामहे सूत्रमिदं नास्ति। ३ 'शरदादेरत्' ८। १। १८ सरओ, सरद्। भिसओ, भिषक्। 'क्षुधो हा' ८। १। १७ छुहा, क्षुत्। हे०। ४ संजीवनीसंमतः पाठः। ५. आपि कृते दिशाशब्दः प्रकृतिः। कश्चित् दिशा, प्रावृड् इति संस्कृतदर्शनात्।

दिक्प्रावृषोः सः—एतयोरन्त्यस्य स स्यात्। दिसा। पाउसो। 'आयुरप्सरसो· सो वा हलोऽन्त्यस्य विधीयते'। दीहाउसो, दीहाऊ। अच्छरसा, अच्छरा ॥११॥

दिश्, प्रावृष् शब्द के अन्त्य हल् को सकारादेश हो। (दिश्) दिसा। (प्रावृष्) ष को सकारादेश। ५ से रेफ का और वकार का लोप। ११ से ऋ को उकार। 'अ-सन्त प्रावृट्·' (४+१८) से पुलिङ्ग। ४२ से ओकार। पाउसो। 'आयुस् और अप्सरस् शब्द के अन्त्य हल् को सकारादेश हो। (दीर्घायुष्) ५ से रेफलोप। २३ से हकारादेश। ४ से यलोप। पूर्ववत् पुंस्त्व, ओत्व। दीहाउसो। पक्ष में–६० से अन्त्य· लोप। ४२ से दीर्घ। दीहाऊ। (अप्सरस्) ६४ से प्स को छकार। ६ से द्वित्व। ७ से चकार। अच्छरसा। पक्ष में–५४ से आकार। अन्य कार्य पूर्ववत्। अच्छरा ॥११॥

नोट– न० (४२) स्यथ्यद्यां चछजाः। (६०) अन्त्यस्य हलः। (६) शेषादेशयोर्द्वित्वमनादौ। (५२) सुभिसुप्सु दीर्घः। (६७) आ समृद्ध्यादिषु वा। (२) कगचजतदपयवां प्रायो लोप। (२३) खघथधभां ह·। (१८) अधयादिषु। (४२) अत ओत्सोः। (२६) शषोः स। (५) सर्वत्र लवराम्। (११) उदृत्वादिषु। (४) अधो मनयाम्। (६४) श्चत्सप्सां छः। (७) वर्गेषु युजः पूर्वः। (५४) आदीतौ बहुलम्।

## मो बिन्दुः ॥ १२ ॥

अन्त्यस्य हलो मकारस्य बिन्दुर्भवति। अच्छं (४–२० विकल्पेन पुंसि अमि, ५–३ अमोऽकारस्य लोपः, शे० ३–३० सु० स्प०)। वच्छं (स्प०)। भद्दं (३–३ र्लोपः, ३–५० द्वि०, शे० पू०)। अग्गिं (३–२ नलोपः, ३–५० गद्वि०, शे० पू०)। दट्ठं (३–१० ष्ट्=ठ्, ३–५० ठ्द्वि०, ३–५१ ठ्=ट्, शे० पू०)। वणं। धणं[१] (२–४२ न्=ण्, शे० पू०) ॥ १२ ॥

## अचि मश्च ॥ १३ ॥

अचि परतो मो[२] भवति वा। फलमवहरइ, फलं अवहरइ (स्प०)[३] ॥

मो बिन्दुरचि वाऽलोपश्च[४]—चकारग्रहणादत्र त्रिसूत्री कल्प्यते। मो बिन्दु (१)। मस्य बिन्दु स्यात्। किं। एदं। कहं। तुण्हिं। अचि वा (२)। अचि परतः अन्त्यस्य मस्य वा अनुस्वार स्यात्। पडमवहरइ, पड अवहरइ। रसमुवणेइ, रस उवणेइ। अलोपश्च (३)। अन्त्यस्य हलो मस्य लोपो न भवति। किम् इणमो। फलम् एरिसं। अहम् एसो। सच्चम् इण ॥ १२–१३ ॥

इस सूत्र में 'लोपश्च' यहाँ चकारग्रहण है, इससे भिन्न-भिन्न तीन कार्यों की कल्पना होगी। 'मो बिन्दुः' १। म को बिन्दु हो। (किम्) किं। (एतद्) उक्त से म को अनुस्वार। एदं। (कथम्) उक्त से बिन्दु। २३ से थ को ह। कहं। (तूष्णीम्) ५९ से ऊकार को उकार। ३६ से ईकार को इकार। 'ह्नष्ण०' (३+३३) से ष्ण को ण्ह। अनु·

---

१ अक्ष, वत्स·, भद्रम्, अग्नि·, दष्ट·, वन, धनम्। २. क० पु० बिन्दु· पा०। ३ फलमपहरति। ४. सञ्जीवनीसंमत. पाठ एष.। 'मो बिन्दुः,' 'अचि मश्च'–इति सूत्रद्वयमत्र मामहे।

स्वार। छुपिंह। 'अचि वा' २। अच् के परे अन्त्य मकार को अनुस्वार विकल्प से हो। (पटम् अपहरति) १९ से ट को ड। १८ से प को वकार। २ से तकारलोप। पडमवहरइ। पक्ष में–पडं अवहरइ। एवम् (रसम् उपनयति) २५ से न को ण। रसमुवणेइ, रसं उवणेइ। जिस पक्ष में मकार को अनुस्वार नहीं हुआ, किंतु मकार रहा, वहाँ ६० 'अन्त्यस्य हलः' से लोप प्राप्त था, नहीं होगा। किम् इणमो। फलम् पुरिसं। अहम् एसो। सवम् इणं–इत्यादि ॥ १३ ॥

## नञोर्हलि ॥ १४ ॥

नकारञकारयोर्हलि परतो बिन्दुर्भवति मकारश्च। नस्य-अंसो, अम्सो (५–१ ओ, शे० स्प०)। कंसो, कम्सो। ञस्य–वंचणीअं, वम्चणीअं (२–४२ न्=ण्, २–२ य्लोपः, ५–३० बिं०, शे० स्प०)। विंझो, विम्झो² (३–२८ ध्य्=झ्, न्कारस्य बिन्दौ मकारे च ३–५६ सूत्रेण द्वित्वादिबाधः) ॥ १४ ॥

नञो²र्हलि—नकारञकारयोर्हलि बिन्दु स्यात्। संझा। वंझा। पंती। संकरो ॥
नकार और ञकार को हल् के परे अनुस्वार हो। (सन्ध्या) ३३ से ध्य को झ आदेश। संझा। (वन्ध्या) वंझा। (पङ्क्तिः) २ से ककारलोप। ५२ से इकारदीर्घ। पंती। (शङ्करः) २६ से श को स। ४२ से ओकार। संकरो ॥ १४ ॥

## वक्रादिषु ॥ १५ ॥

वक्रादिषु शब्देषु बिन्दुरागमो भवति। वंकं (३–३ र्लोपः, ५–३० बिं०)। तंसं (३–३ रकारयोर्लोपः, ३–२ य्लोपः, शे० स्प०)। हंसो (३–३ रेफलोपः वलोपश्च, ५–१ ओ)। अंसू (३–३ र्लोपः, २–४३ श्=स्, ५–१८ उद्दीर्घः)। मंसू (३–६ श्लोपः, २–४३ श्=स् ३–३ र्लोपः, ५–१८ उद्दीर्घः)। गुंठी (१–२९ ऋ=उ, ३–१० ष्ट्=ठ्, ५–१८ दीर्घः)। मंथं (१–२२ उ=अ,[3] ३–१२ स्त्=थ्, ५–३० बिं०)। मणंसिणो (१–२ सू० स्प०)। दंसणं (३–३ र्लोपः, २–४३ श्=स्, २–४२ न्=ण्, ५–३० बिं०)। फंसो (३–३६ सू० स्प०)। वण्णो (३–३ र्लोपः, ३–५० ण्द्वि०, ५–१ ओ)। पडिंसुदं (३–३ र्लोपः, २–८ त्=ड्, २–४३ श्=स्, ३–३ र्लोपः, १२–३ त्=द्, ५–३० बिं०, २–४२ श्=स्, ५–१ ओ)। अंसो (स्पष्टम्)। अहिमुंको[4] (२–२७ भ्=ह्, ३–१ क्लोपः, ५–१ ओ)। वक्र–त्र्यस्र–ह्रस्व–अश्रु–श्मश्रु–पुष्टि–मुस्त–मनस्विनी–दर्शन–स्पर्श–वर्ण–प्रतिश्रुत–अश्व–अभिमुक्त–इत्यादयः ॥ १५ ॥

---

१. अंसः, कसः, वञ्चनीय, विन्ध्यः। २. सञ्जीवन्यनुसारी पाठः। ३ मुकुटादेराकृतिगणत्वात्। ४. शकमुकरदशणस्पृत्वे को वा ८।२।२ मुक्को–मुक्कोऽको वद्धो छुक्को छुग्गो भाषकं मावरणं-यति हे०। अत्र अहिमुंको इत्यत्र 'न बिन्दुः परे' इत्यनेन द्वित्वनिषेधो ज्ञेयः।

वक्रादिषु—एषु हलि परे बिन्दुरागम स्यात् । वंको । तंसं । वअंसो । इत्यादि ।

वक्रत्र्यस्रवयस्याश्रुसौरभाणि मनस्विनी ।
स्पर्शो निवसन शुल्क स्युर्वक्रादय ईदृशा ॥ १५ ॥

वक्रादिक शब्दों में हल् के परे अनुस्वार का आगम हो । ( वक्रः ) ५ से रेफ का लोप । वंको । ( त्र्यस्रम् ) अनुस्वारागम । पूर्ववत् रेफलोप । ४ से यलोप । तसं । ( वयस्यः ) वअंसो । ( अश्रु ) अंसु । ( सौरभम् ) १४ से औ को ओ । 'खघथधभां ह.' सूत्र में प्राय.पदानुवृत्ति से भ को ह नहीं होगा । अनुस्वारागम । सोरभं । 'नपुंसके सोर्बिन्दुः' से अनुस्वारागम सिद्ध ही था फिर वक्रादि में सौरभ शब्द का पाठ मन्द-प्रयोजन है । ( मनस्विनी ) मणंसिणी । ( स्पर्श ) 'स्पस्य फः' ( ३ + ३६ ) से फादेश । फंसो । ( निवसनम् ) णिअंसणं । ( शुल्कम् ) सुंकं ॥ १५ ॥

नोट—नं० (२३) खघथधभां हः । (५९) उदूतो मधूकादिषु । (१६) इदीतः पानी यादिषु । (११) टो ड. । (१८) पो व. । (२) कगचजतदपयवां प्रायो लोपः । (२५) नो ण सर्वत्र । (३३) ष्पस्पयोर्फः । (५२) सुभिसुप्सु दीर्घः । (२३) शषोः सः । (४२) अत ओत्सोः । (५) सर्वत्र लवराम् । (४) अधो मनयाम् । (१४) औत ओत् । (५८) अदातो यथादिषु वा ।

## मांसादिषु वा ॥ १६ ॥

मांसादिषु शब्देषु वा बिन्दुः प्रयोक्तव्यः । मंसं, मासं ( स्प० ) । कहं, कह ( २–२७ थ् = ह्, शे० स्प० ) । णूणं, णूण ( स्प० ) । तहिं, तहि ( स्प० ) । असुं, असु[1] ( स्प० ) । तदयमपठितो मांसादिर्गणः । यत्र क्वचिद्वृत्तभङ्गभयात् त्यज्यमानः क्रियमाणश्च बिन्दुर्भवति, स मांसादिषु द्रष्टव्य. ॥ १६ ॥

मासादिषु[2]—मण्डूकप्लुत्या लोप इत्यनुवर्तते । मांसादिशब्देषु बिन्दुलोपो वा स्यात् । मास, मस । कहं, कह । णूण, णूण । दाणि, दाणि । समुहो, समुहो । 'सस्कार-सस्कृतादौ तु नित्य बिन्दुर्विलुप्यते' । सक्कारो । सक्कअ ॥ १६ ॥

मण्डूकप्लुति से लोप पद की अनुवृत्ति । मांसादिक शब्दों में अनुस्वार का विकल्प से लोप हो । (मांसम्) अनुस्वार का लोप । मास । पक्ष में-५८ से आकार को अकार । मस । ( कथम् ) २३ से थ को हकार । कहं, कह । ( नूनम् ) णूणं, णूण । ( इदानीम् ) दाणि, दाणीं । ( समुख ) समुहो, समुहो । संस्कार और सस्कृत शब्द में नित्य अनुस्वार का लोप होगा । ( सस्कार. ) ३ से सकारलोप । मांसादित्व से नित्य अनुस्वार का लोप । ६ से ककारद्वित्व । सक्कारो । ( संस्कृतम् ) ९ से ऋ को अकार । २ से तकारलोप । अन्य कार्य पूर्ववत् । सक्कअ ॥ १६ ॥

## ययि तद्वर्गान्तः ॥ १७ ॥

ययि परतो बिन्दुस्तद्वर्गान्तो वा भवति । सङ्का ( २–४३ श् = स्,

[1] क० पु० मास, कथम्, नूनम्, तहिं, अंसु अ० पा० । [2] संजीवन्यां सूत्रान्ते 'वा'-इति नास्ति ।

शे० स्प० )। सङ्खो ( ५-१ ओ, शे० पूर्व० )। अङ्को। अङ्कं ( स्प० )। सञ्चरइ ( ७-१ ति=इ, शे० स्प० )। सण्ढो ( २-४३ ष्=स् )। सन्तरइ ( स्प० )। सम्पत्ती ( ५-१८ दीर्घः, शे० स्प० )। यथीति किम्? अंसो ( ४-१४ सूत्रे स्प० )। वाऽधिकारात् पंकं, बिंदू, संका, संखो। ( सुगमानि )[1] ॥ १७ ॥

कपि[2] तद्वर्ग्यान्तः—कवर्गादारभ्य पवर्गं व्याप्य कप्-प्रत्याहारग्रहणेन ग्राह्यम्। कादिपञ्चवर्गीयाक्षरे परे यो वर्ण परस्तद्वर्गीय. पञ्चमाक्षरोऽनुस्वारस्य वा भवति। सङ्करो, सकरो। धणञ्जओ, धणंजओ। सण्ठिओ, संठिओ। चिरन्तण, चिरंतणं। किम्पि, किंपि। सन्तो, संतो। गुम्फिअं, गुंफिअं। पदान्त एवायमिति केचित् ॥ १७ ॥

कवर्ग से लेकर पवर्ग पर्यन्त अर्थात् क से म पर्यन्त कप् प्रत्याहार है। इन कवर्गादि पाँच वर्गों के किसी अक्षर के परे अनुस्वार को पञ्चम अक्षर हो, अर्थात् जिस वर्ग का अक्षर पर में होगा उसी वर्ग का पाँचवाँ अक्षर होगा। ( संकरः ) श को स। नकार को णकार। यकार तकार का लोप। पूर्वोक्त २६+२५+४+२ से जानना। अनुस्वार को विकल्प से ककार के परे ङकार हो गया। सङ्करो। पक्ष में-संकरो। एवम् ( धनजयः ) धणञ्जओ, धणंजओ। ( संस्थितः ) ३ से षकारलोप। सण्ठिओ, संठिओ। ( चिरन्तनम् ) चिरन्तण, चिरतणं। ( किमपि ) किम्पि, किंपि। जहाँ पदान्त नहीं है, वहाँ भी विकल्प से अनुस्वार होगा। ( शान्तः ) सन्तो, संतो। ( गुफितम् ) गुम्फिअं, गुफिअ। कोई आचार्य पदान्त में ही विकल्प से परसवर्ण मानते हैं, परंतु इसमें कोई प्रमाण नहीं है और प्राकृत में दोनों प्रकार के प्रयोग मिलते हैं ॥ १७ ॥

## नसान्तप्रावृट्शरदः पुंसि ॥ १८ ॥

नकारान्ताः सकारान्ताश्च प्रावृट्शरदौ च पुंसि प्रयोक्तव्याः। नान्ताः—कम्मो ( ४-६ अन्त्यनकारलोपः, ३-३ र्लोपः, ३-५० मद्वि०, ५-१ ओ )। जम्मो ( ३-४३ सू० स्प० )। वम्मो ( ३-३ र्लोपः, ३-५० मद्वि०, ४-६ न्लोपः, ५-१ ओ )। सान्ताः-जसो ( २-३१ सू० स्प० )। तमो ( ४-६ स्लोपे, पुंस्त्वे च, ५-१ ओ ) सरो। पाउसो ( १-३० सू० स्प० )। सरओ[3] ॥ १८ ॥

नसन्तप्रावृट्शरदः पुंसि[4]—नकारान्त सकारान्त. प्रावृटशरदौ च पुंसि भवन्ति। चम्मो। वम्मो। 'नान्तं नपुंसके विद्धि पुलिङ्गेऽपि प्रशस्यते'। चम्मं। कम्मं। पेम्म। तमो। महो। पाउसो। सरओ ॥ १८ ॥

---

१. शङ्खः, शङ्ख, कस., अङ्कः, अङ्क, सञ्चरति, षण्ढः, सन्तरति, सम्पत्तिः, अंसः, पङ्क, बिन्दु। २. सञ्जीवनीसमतः पाठ। ३ कर्म्मन्, जन्मन्, वर्म्मन्, यशस्, तमस्, सरस्, प्रावृष्, शरदः। यत्र सेग्रं, वय, सुमण, सम्मं, चम्मसिति दृश्यते तद् बाहुलकाधिकारात्-इति हेमः। ४. संजीवन्यादिसंमतोऽयं पाठः।

नकारान्त, सकारान्त, प्रावृष् और शरद् शब्द का पुंलिङ्ग में प्रयोग हो। (चर्मन्) नपुंसकलिङ्ग प्राप्त था, पुंलिङ्ग हो गया। ४२ से ओकार। ५ से रेफलोप। ६ से द्वित्व। चम्मो। एवम् (वर्मन्) वम्मो। नकारान्त नपुंसकलिङ्ग में तो है और पुंलिङ्ग में भी होता है। तो नपुंसकलिङ्ग में ६० से अन्त्य हल् नकार का लोप। ६२ से अनुस्वार। चम्मं। वम्मं। (प्रेमन्) पूर्ववत् साधुत्व। पेम्मो, पेम्मं। (तमस्) सान्त होने से पुंलिङ्ग। तमो। (महस्) महो। (प्रावृष्) ५ से रेफलोप। २ से वलोप। ११ से ऋकार को उकार। 'दिक् प्रावृ०' (४+१२) से ष् को सस्वर सकार। प्रकृत से पुंलिङ्ग। पाउसो। (शरद्) २६ से सकार। 'शरदोऽत्' से द् को अकार। सरओ ॥१८॥

नोट—नं० (३) उपरि लोपः कगडतदपषसाम्। (६) शेषादेशयोर्द्वित्वमनादौ। (९) ऋतोऽत्। (२) कगचजतदपयवां प्रायो लोपः। (२६) शषोः सः। (२५) नो णः सर्वत्र। (४) अधो मनयाम्। (४२) अत ओत्सोः। (६०) अन्त्यस्य हलः। (६२) नपुंसके सोर्बिन्दुः। (११) उदृत्वादिषु।

## न शिरोनभसी ॥ १९ ॥

शिरस्, नभस् इत्येतौ न पुंसि प्रयोक्तव्यौ। सिरं (४-६ सलोपः, ५-३० बि०)। णहं ॥ १९ ॥

न शिरोनभसी—एतौ पुंसि न स्त। सिरं। णहं ॥ १९ ॥

शिरस्, नभस् को पुंलिङ्ग न हो। सान्तत्वात् पूर्वसूत्र से प्राप्त पुंस्त्व का निषेधक यह सूत्र है। (शिरः) २६ से श को स। ६० से अन्त्यलोप। ६२ से अनुस्वार। सिरं। (नभः) २५ से णकार। २३ से भकार को हकार। अन्य कार्य पूर्ववत्। णहं ॥ १९ ॥

## पृष्ठाक्षिप्रश्नाः स्त्रियां वा ॥ २० ॥

एते स्त्रियां वा प्रयोक्तव्याः। पुट्ठी, पुट्ठं (१-२९ ऋ = उ, ३-१० ष्ठ = ठ, ३-५० ठ्द्वि०, ३-५१ ठ् = ट्, स्त्रीत्वे ई, पक्षे-पूर्ववत्कार्येषु कृतेषु ५-३० बि०)। (एवम्)-अच्छी, अच्छं (३-३० क्षु० स्प०)। अच्छो पुंस्त्वे तु (५-१ ओ)। पण्हा, पण्हो (३-३ रलोपः, ३-३३ श्न = ण्ह, स्त्रीत्वे आत्वं, पुंस्त्वे ५-१ ओ)। पृष्ठम्। अक्षि। प्रश्नः ॥ २० ॥

पृष्ठाक्षिप्रश्नाः स्त्रियां वा—एते स्त्रिया वा स्युः। पट्ठी, पट्ठ। अच्छी, अच्छि। पण्हा, पण्हो। 'एवं लिङ्गविपर्यासो ज्ञेयः शब्दान्तरेष्वपि'। गुणाइं। बिन्दूइं। लोअणा। रस्सीओ ॥ २० ॥

पृष्ठ, अक्षि, प्रश्न ये स्त्रीलिङ्ग में विकल्प से हों। (पृष्ठम्) ९ से ऋ को अकार। ३ से षकार का लोप। ६ से द्वित्व। ७ से टकार। ५४ से ईकार। पट्ठी। कोई-कोई आचार्य ऋष्यादि में पाठ मान कर इकार मानते हैं-'पीठ' लोकभाषा। पञ्जाब में उकार-'पुट्ठे तरफ दिट्ठा'। पक्ष में-पट्ठं। (अक्षि) ६८ से क्ष को छ। द्वित्व, चकार, ईकार पूर्ववत्। अच्छी, अच्छि। (प्रश्नः) 'ह्नश्नष्ण०' (३+३३) श्न को ण्ह आदेश। ५४ से स्त्रीलिङ्ग में आकार। पण्हा। पक्ष में-पण्हो। इसी प्रकार प्राकृतभाषा में लिङ्गव्यत्यय अन्यत्र भी जानना। (गुणाः) 'इं जश्शसोर्दीर्घश्च' (५+२६) से जस् को इंकार।

पूर्व को दीर्घ । गुणाइं । एवम् (बिन्दवः) बिन्दूइं । ( लोचनम् ) लोअणा । (रश्मयः) २६ से श को स । ४ से मलोप । ६ से द्वित्व । 'जसो वा' ( ५+२० ) से जस् को ओकार । १८ से दीर्घ । रस्सीओ ॥ २० ॥

## ओदवापयोः ॥ २१ ॥

**अव, अप इत्येतयोरुपसर्गयोर्वा ओत्वं भवति । ओहासो, अवहासो । ओसारिअं, अवसारिअं ( २-२ तुलोपः, ५-३० बिं० ) । अवहासः, अपसारितम् ॥ २१ ॥**

ओदवापयोः—अव-अप-इत्येतयोरुपसर्गयोः ओकारादेशो वा स्यात् । ओवासो, अवआसो । ओसिअं, अवसिअ । ओपत्तं, अवअत्तं । 'ओत्वं वा स्यान्निरो माल्ये क्वचिदोत्वमुपस्य वा' । ओमल्लं । णिम्मल्लं । ओहसिअं, पक्षे-उवहसिअं । 'लुग्वा दुरुपसर्गस्य विसर्गस्य क्वचिद् भवेत्' । दुलहो, दुल्लहो । दूसहो, दुसहो । 'ऊदुत' सविसर्गस्य दुःसहादौ विकल्प्यते' ॥ २१ ॥

अव, अप उपसर्गों को ओकार विकल्प से हो । (अवकाशः ) काशको वास आदेश । अव को ओकार । ओवासो । पक्ष में-२ से कलोप । अवआसो । ( अपसृतम् ) अप को ओकार । १० से इकार । तलोप । ओसिअं । पक्ष में-१८ से प को व । अवसिअं । ( अपवृत्तम् ) अप को ओकार । ९ से ऋ को अ । २ से वलोप । ओअत्तं । पक्षे-अवअत्त । निर् उपसर्ग को माल्य शब्द के परे विकल्प से ओकार हो और कहीं उप को विकल्प से ओकार हो । ( निर्माल्यम् ) निर् को ओकार । ४ से यलोप । ६ से द्वित्व । ५८ से आ को अ । ओमल्लं । पक्ष में-णिम्मल्ल । ( उपहसितम् ) ओहसिअं । पक्ष में—उवहसिअं । कहीं पर दुर् उपसर्ग के विसर्ग का लोप हो । ( दुर्लभः ) २३ से भ को ह । दुलहो । पक्ष में-दुल्लहो । दुःसहादिक शब्दों में विसर्गसहित उकार को विकल्प से ऊकार हो । दूसहो । पक्ष में-दुसहो ॥ २१ ॥

नोट—नं० (२६) शषोः सः । (६०) अन्त्यस्य हलः । (६२) नपुंसके सोर्बिन्दुः । (२५) नो णः सर्वत्र । (२३) खघथधभां हः । (९) ऋतोऽत् । (३) उपरि लोपः कगडतदपषसाम् । (६) शेषादेशयोर्द्वित्वमनादौ । (७) वर्गेषु युजः पूर्वः । (५४) आदीतौ बहुलम् । (१८) अवयादिषु च' । (४) अधो मनयाम् । (४८) जश्शस्ङस्यामु दीर्घः । (२) कगचजतदपयवां प्रायो लोपः । (१०) इदृष्यादिषु । (१८) पो वः । (५८) अदातो यथादिषु वा ।

## तलूत्वयोर्दात्तणौ[1] ॥ २२ ॥

**तल्-त्व-इत्येतयोः प्रत्यययोर्यथासंख्यं दा, त्तण इत्येतावादेशौ स्तः । पीणदा ( २-४२ न् = ण ) । मूढदा ( १२-३ त्-द् ) । पीणत्तणं । मूढत्तणं ( ५-३० बिं० ) ॥ २२ ॥**

तलत्वयोर्दात्तणौ—एतयोर्यथासंख्यमेतौ वा स्तः । रम्मदा, रम्मत्तणं, रम्मत्तं । तणुदा, तणुत्तणं, तणुत्तं ॥ २२ ॥

---

१. 'त्वतलोः प्पणः' ८ । ४ । ४३७ । अपभ्रंश । इति हे० ।

तल् और त्व प्रत्यय को क्रम से दा और त्तण आदेश होते हैं। अर्थात् तल्प्रत्यय को दा और त्वप्रत्यय को त्तण। ( रम्यता ) तल्प्रत्यय को दा आदेश। ४ से यलोप। ७ से द्वित्व। रम्मदा। ( रम्यत्वम् ) त्तण आदेश। रम्मत्तणं। पक्ष में-५ से वलोप, द्वित्व। रम्मत्त। एवम्-( तनुता ) तणुदा। २५ से न को ण। ( तनुत्वम् ) तणुत्तणं। तणुत्तं॥ २२ ॥

## क्त्व ऊणः[1] ॥ २३ ॥

क्त्वा-प्रत्ययस्य ऊण इत्ययमादेशो भवति। घेऊण ( ८-१६ ग्रह = घेत् )। सोऊण ( ३-३ र्लोपः, २-४३ श् = स् , उ = ओ गुणेन[2] ) काऊण ( ८-१७ कृञ्=का )। दाऊण ( स्पष्टम् )। गृहीत्वा, श्रुत्वा, कृत्वा, दत्त्वा ॥ २३ ॥

क्त्व तूण[3]—क्त्वा प्रत्ययस्य तूण इत्ययमादेशः स्यात्। हतूण। आणिऊण। काऊण। घेत्तूण। 'क्वापि क्त्वाप्रत्ययादेशो उआण इत्यपीष्यते'। घेत्तुआण। सोउआण। 'उ वाशब्दस्य वादेश क्त्वास्थितस्य क्वचिद् भवेत्'। दट्ठु। मोत्तु। होउ। 'असमासे अआदेशः क्त्वेत्येतस्य प्रवर्तते'। जाणिअ। पडिअ। ओसरिअ। परिहरिअ॥ २३ ॥

क्त्वा प्रत्यय को तूण आदेश हो। ( हत्वा ) हन्+क्त्वा, क्त्वाप्रत्यय को तूण आदेश। नकार को अनुस्वार। हंतूण। ( आनीय ) आङ्पूर्वक नीधातु, क्त्वाप्रत्यय। धातु के ईकार को बहुलग्रहण से ह्रस्व इकार। २ से तूण आदेश के तकार का लोप। यह लोप प्रायिक है। अतः प्रयोगानुकूल कहीं होगा और कहीं नहीं। आणिऊण। ( कृत्वा ) कृञ् को 'कृञः का०' ( ७+१४ ) से का आदेश। काऊण। ( गृहीत्वा ) ग्रह्+क्त्वा। क्त्वा को तूण। ग्रह् को 'घेत्क्त्वातुमुन्०' ( ७+२२ ) से घेत् आदेश। घेत्तूण। कहीं क्त्वाप्रत्यय को उआण आदेश हो। ग्रह् को घेत् आदेश। घेत्तुआण। ( श्रुत्वा ) २६ से सकार। ५ से रेफलोप। बहुलग्रहण से उकार को ओकार। सोउआण। क्त्वाप्रत्यय में विद्यमान वा को 'उ' आदेश विकल्प से हो। ( दृष्ट्वा ) वा को उ आदेश हुआ। २८ से ष्ट को ठ। ६ से द्वित्व। ७ से टकार। ९ से ऋ को अकार। दट्ठु। ( मुक्त्वा ) १ से उ को ओकार। वा को उ आदेश। ३ से कलोप। ६ से तकारद्वित्व। मोत्तु। ( भूत्वा ) भू को हो आदेश हो। २ से तकार का लोप। होउ। क्त्वाप्रत्यय को असमास में इअ आदेश हो। ( ज्ञात्वा ) ज्ञा धातु को 'ज्ञो जाणमुणौ' ( ७+२९ ) से जाण आदेश। जाणिअ। एव मुणिअ। ( पतित्वा ) पडिअ। उपसर्ग के साथ समास में भी इअ होता है। ( अपसृत्य ) ओसरिअ। ( परिहृत्य ) परिहरिअ॥ २३ ॥

## तृण[4] इरः शीले ॥ २४ ॥

शीले यस्तृन्प्रत्ययो विहितस्तस्य इर इत्ययमादेशो भवति। भ्रमण-

---

१ का० पु० पा० 'ऊण्' पा०। २ 'युवर्णस्य गुणः' ८। ४। २३७। धातोरिवर्णोवर्णस्य क्ङित्यपि गुणः। जेऊण, नेऊण, नेइ, नेन्ति, उड्डेइ, उड्डेन्ति, मोत्तूण, सोऊण। क्वचिन्न-नीओ उड्डीणो इति हेमच०। ३. संजीवनीसमतः पाठः। ४. का० पा० तून्।

शीलो भमिरो[1] । हसनशीलो हसिरो ( ५-१ ओ, स्पष्टप्राये ) ॥ २४ ॥

तृनं इर शीले—तच्छीलादिष्वर्थेषु तृन्-प्रत्ययस्य इर इति स्यात् । घोलिरं । जपिरं । विविरं ॥ २४ ॥

तच्छील, तद्धर्म, तत्साधुकारी अर्थ में तृन्प्रत्यय को इर आदेश हो । ( घूर्णितृ ) घूर्णितुं शीलमस्य । तृन्प्रत्यय को इर आदेश । 'घूर्णो घोलघुम्मौ' ( ७+५ ) से घोल आदेश । घोलिरं । जल्पितुं शीलमस्य जंपिरं । वेपितु शीलमस्य विविरं । १८ से पकार को वकार ॥ २४ ॥

नोट—नं० (४) अधो मनयाम् (६) शेषादेशयोर्द्वित्वमनादौ । (५) सर्वत्र लवराम् । (२५) नो णः सर्वत्र । (२) कगचजतदपयवा प्रायो लोप. । (२६) शषोः सः । (२८) ष्टस्य ठ. । (७) वर्गेषु युज. पूर्व. । (९) ऋतोऽत् (१) उत ओत्तुण्डसमेषु । (३) उपरि लोप. कगडतदपषसाम् । (१८) पो वः ।

## आल्विल्लोल्लालवन्तेन्ता मतुपः ॥ २५ ॥

आलु, इल्ल, उल्ल, आल, वन्त, इन्त, इत्येत आदेशा मतुपः स्थाने भवन्ति । आलुस्तावत्–ईसालू ( ३-३ रलोपः, २-४३ ष्=स्, आलुकृते, ५-१८ दीर्घः ) । णिद्दालू ( २-४२ न्=ण्, ३-३ र्लोपः, ३-५० वृद्धि०, शे० पू० ) । इल्लः–विआरिल्लो[3] ( २-२ अलोपः, इल्ले कृते, ५-१ ओ ) । मालाइल्लो ( ५-१ ओ, शे० स्प० ) । उल्लः–विआरुल्लो ( २-२ कलोपः, शे० स्प० ) । आलः[4]–धणालो ( २-४२ न्=ण्, ५-१ ओ ) । सद्दालो ( ३-३ व्लोपः, ३-५० वृद्धि०, ५-१ ओ ) । वन्तः–धणवन्तो ( स्प० ) । जोव्वणवन्तो ( २-३१ य्=ज्, प्राय इति वलोपो न, २-४२ न्=ण्, ५-१ ओ ) । इन्तः[5]–रोसाइन्तो[6] ( २-४३ ष्=स्, ५-१ ओ ) । पाणाइन्तो ( ३-३ र्लोपः, शे० पू०[7] ) । यथादर्शनमेते प्रयोक्तव्याः, न सर्वे सर्वत्र । ईर्ष्यावत्, निद्रावत्, विकारवत्, मालावत्, धनवत्, शब्दवत्, यौवनवत्, रोषवत्, प्राणवत्, ।

'क्वचिदा मतुपोऽन्त्यस्य मन्तो वा दृश्यते क्वचित् ।'

हणुमा, हणुमन्तो ( २-४३ न्=ण्, मतुपोऽन्त्यस्यात्वपक्षे, मन्तादेशः, ५-१ ओ ) ।

'इल्लोल्लावपरे प्राय. शैषिकेषु प्रयुञ्जते' ।

पौरस्त्यं=पुरोभवं, पुरिल्लं ( पुरल्–अत्र ४-५ सलोपे च, शैषिक इल्ल–प्रत्यये, ४-१ अलोपे, ५-३० बिं० ) । आत्मीयम्=अप्पुल्लं (३-४८ त्म्=प्, ३-५० पद्वि०, ४-६ म्लोपः, ४-१ अलोपः, उल्लप्रत्ययः, ५-३० बिं० ) ।

---

१. क्वचिद् भमिरो पा० । २. सञ्जीवनीसमतः पाठ. । ३. का० पा० विआरइल्लः । ४. का० पा० अल्लः । ५. का० पा० इत्तः । ६ का० पा० रोस । ७ एषु सर्वत्र लोपादिकमन्त्यिमकार्यं ४-१ सूत्रेण बोध्यम् ।

'परिमाणे किमादिभ्यो भवन्ति केद्दहादयः।'

**केद्दहं, केत्तिअं। जेद्दहं, जेत्तिअं। तेद्दहं, तेत्तिअं। एद्दहं, एत्तिअं। ( किमः केद्दह, केत्तिअ। यदो जेद्दह, जेत्तिअ। तदः तेद्दह, तेत्तिअ। एतद् एद्दह, एत्तिअ-इत्यादेशाः भवन्तीत्यर्थः, ५-३० बिन्दुः सर्वत्र )।**

'कृत्वसो हुत्तमित्यन्ये देशीशब्द' स इष्यते'।

**सअहुत्तं ( २-४३ श् = स्, २-२ तलोपे, कृत्वसो हुत्तादेशे, ५-३० बिं० )। सहस्सहुत्तं ( ३-३ रलोपः, ३-५० सद्वि०, शे० पू० )।**

'जातौ वा स्वार्थिक क'।'

**[ जातौ स्वार्थे ककारः प्रयोक्तव्यः ][1]।**

**( पद्मं = पदुमअं, पक्षे-पदुमम्[3] )[4] ॥ २५ ॥**

आल्विल्लोल्लालवन्तेन्ता मतुप —तदस्यास्त्यस्मिन्नर्थे विहिताना मतुबादीनां प्रत्ययाना स्थाने यथादर्शनम्—आलु, इल्ल, उल्ल, आल, वन्त, इन्त इत्येते आदेशा भवन्ति। ईसालू। णेहालू। गहिल्लो। सणेहिल्लो। विआरुल्ल। विहारुल्ल। वणाल। चोराल। जसवन्तो। धणवन्तो। घरइन्तो। पुत्तइन्ता। 'अर्थे तस्येदमित्यस्मिन्नुल्ल, इल्लस्तु तद्भवे'। अप्पुल्ल। गामेल्लिआ। पुरिल्ल। 'भवेता मतुपोऽन्त्यस्य न्त आकारस्तथा क्वचित्'। हनुम तो, हनुमा। 'सङ्ख्याया कृत्वसो हुत्त आभिमुख्येऽपि दृश्यते'। पञ्चहुत्त। छहुत्त। सअहुत्त। पिअहुत्त। घरहुत्त। 'इष्टौ किंयत्तदेतेभ्य परिमाणे त्तिअ-द्दहौ'। केत्तिअ, केद्दह। जेत्तिअ, जेद्दह। तेत्तिअ, तेद्दह। एत्तिअ, एद्दह ॥ २५ ॥

अस्य, अस्ति, अस्मिन् अर्थों में विहित मतुबादिक प्रत्ययों को प्रयोगानुकूल जैसा प्रयोग कविसम्प्रदाय में मिले, तदनुकूल, आलु-इल्ल-उल्ल-आल-वन्त-इन्त आदेश होते हैं। क्रम से उदाहरण। आलु-(ईर्ष्यावान्) ईर्ष्या अस्य अस्ति, इस अर्थ में आलु-प्रत्यय। २६ से ष को स। ४ से य का, ५ से रेफ का लोप। सर्वत्र ३५ से अकार आकार का लोप जानना। ईसालू। 'ईर्ष्यालुः' इस संस्कृत शब्द से भी ईसालू हो सकता है। ( स्नेहवान् ) ३ से सकारलोप। २५ से न को ण। णेहालू। इल्ल-( ग्रहवान् ) इल्ल आदेश। ५ से रेफलोप। गहिल्लो। ( स्नेहवान् ) इल्ल आदेश। 'स्नेहे वा' (३ + ६२) से 'स्न' का विप्रकर्ष, अकार-स्वर। पूर्ववत् नकार को णकार। हकाराकार का लोप। सणेहिल्लो। उल्ल ( विकारवत् ) उल्ल आदेश। २ से ककार का लोप। विआरुल्ल। ( विहारवत्-विहारिन् ) उल्ल आदेश। विहारुल्ल। आल-( वनवान् ) २५ से न को ण। वणालो। ( चौरवत् ) १४ से औकार को ओकार। चोराल। वन्त-( यशस्वी ) २४ से य को जकार। २६ से श को स। ६० से सकारलोप। जसवन्तो। (धनी-धनवान्) धणवन्तो। इन्त-( गृही-गृहवान् ) 'गृहस्य घरोऽपतौ' ( ४ + ३५ ) से गृह को घर

१ केचित् सूत्ररूपेण पठन्ति। २ क० पु० न दृश्यते [ ] कोष्ठकान्तर्गतः पाठः। ३ ( ) कोष्ठकान्तर्गत पाठ प्रायस्त्रुटित एव। ४, अतोर्डेत्तुल. ८। ४। ४३५। अपभ्रंशे इदंकिंयत्तदेतद्भ्य परस्य अतो प्रत्ययस्य डेत्तुल इत्यादेशो भवति। एत्तुलो, केत्तुलो, जेत्तुलो, तेत्तुलो, एतत्तुलो। इति हेम.।

आदेश। घरइन्तो। ( पुत्रवती ) ५ से रेफलोप। ६ से द्वित्व। पुत्तइन्ता। 'तस्येदम्' इस अर्थ में उल्ल और तदुत्पन्न इस अर्थ में इल्ल होते हैं। ( आत्मीयम् ) 'आत्मनि पः' से त्म को पकार। ६ से पकारद्वित्व। ५८ से आ को अकार। ६० से न् का लोप। पूर्ववत् ६५ से अकारलोप। अप्पुल्लं। ( ग्रामीणाः ) तत्रत्व अर्थ में इल्ल आदेश। पूर्ववत् रेफलोप। गाम-इल्ल होने पर ३५ से अ-इ को एकार। एकवचन में गामेल्लो। कप्रत्यय में ३५ से लकाराकार को इकार। गामेल्लिओ। बहुवचन में गामेल्लिआ। पुरो भवम्-( पौरस्त्यम् ) पुरस् से इल्ल। पूर्ववत् ६० से सलोप। पुरिल्लं। कहीं पर मतुप् प्रत्यय के अन्त को न्त आदेश तथा कहीं आकार हो। ( हनुमान् ) त् को न्त आदेश। हनुमन्तो। एवम् ( बलवान् ) बलवन्तो। जहाँ आकार होगा वहाँ हनुमा। सङ्ख्यावाचक शब्द से पर कृत्वस्प्रत्यय को और आभिमुख्य अर्थ में हुत्त आदेश हो। ( पञ्चकृत्वः ) पंचहुत्तं। ( षट्कृत्वः ) 'षट्शावक०' ( २+३७ ) से छ आदेश। छहुत्तं। ( शतकृत्वः ) सअहुत्त। ( प्रियाभिमुखम् ) पिअहुत्तं। ( गृहाभिमुखम् ) घरहुत्तं। अभिमत अर्थ में किम्-यद्-तद्-एतद् शब्दों से परिमाण अर्थ में विद्यमान प्रत्यय को त्तिअ इह आदेश हों। कियत् परिमाणमस्य ( कियत् ) किम् को कादेश। ३१ से एकार। केत्तिअ, केद्दहं। ( यावत् ) सर्वत्र ६० से अन्त्य त् का लोप। ३१ से एकार। २४ से यकार को जकार। जेत्तिअं, जेद्दहं। ( तावत् ) तेत्तिअं, तेद्दहं। ( एतावत् ) एत्तिअं, एद्दह। 'त्तथयो०' ( ५+७५ ) से तकारलोप॥ २५॥

नोट—न. ( २६ ) शषोः स। ( ४ ) अधो मनयाम्। ( ५ ) सर्वत्र लवराम्। ( ३५ ) सन्धौ अज्लोपविशेषा बहुलम्। ( ३ ) उपरि लोपः कगडतदपषसाम्। ( २५ ) नो णः सर्वत्र। ( २ ) कगचजतदपयवां प्रायो लोपः। ( १४ ) औत ओत्। ( २४ ) आदेर्यो जः। ( ६० ) अन्त्यस्य हलः। ( ६ ) शेषादेशयोर्द्वित्वमनादौ। ( ५८ ) अदातो यथादिषु वा। ( ३१ ) ए शय्यादिषु।

## ( स्वार्थे को वा। )

स्वार्थे को वा—प्रातिपदिकात् स्वार्थे कप्रत्ययो वा स्यात्। भमरओ, भमरो। कसणओ, कसणो। चन्दओ, चन्दो। 'चेष्यते स्वार्थ इल्लोल्लौ, आभ्यां क स्वार्थ एव वा'। सञ्च, सच्चिल्लं, सच्चिल्लअं। करहो, करहुल्लो, करहुल्लओ। भमरो, भमरुल्लो, भमरुल्लओ। 'स्वार्थे क' स्यात् डकारोऽपि को वा तस्मादपि स्मृतः'। पुत्तो, पुत्तडो, पुत्तडओ। वच्छो, वच्छडो, वच्छडओ। हत्था, हत्थडा, हत्थडआ। 'द्वित्वापन्नो लकारोऽपि क्वचित्स्वार्थ इतीष्यते'। एकल्लो, एक्को, एकाकी, एको। णवल्लो, णवो। एते प्रत्यया[2] पाणिनीयप्रपञ्चिते सर्वत्रैव कप्रत्ययार्थे द्रष्टव्याः। तेन—

> अज्ञाते कुत्सिते चाल्पे तथा ह्रस्वानुकम्पयोः।
> सञ्ज्ञायामपि विद्वद्भिः प्रत्ययोऽयं विधीयते॥

प्रातिपदिक से स्वार्थ में क-प्रत्यय विकल्प से हो। ( भ्रमरकः ) ५ से रेफलोप। २ से कलोप। ४२ से ओकार। भमरओ। पक्ष में-भमरो। साधुत्व पूर्ववत्। (कृष्णक.)

---

२. नेद सूत्रं भामहे।

९ से ऋ को अकार। 'कृष्णे वा' ( १+६० ) षकार-णकार का विप्रकर्ष, षकार में तास्वरता। कसण । पक्षे-कसणो। एवम् ( चन्द्रकः ) रेफ-ककार का पूर्ववत् लोप। चन्दओ। पक्ष में चन्दो। स्वार्थ में विकल्प से इल्ल उल्ल हों, और उससे क-प्रत्यय विकल्प से हो। ( सत्यम् ) ३२ से त्य को चकार। ६ से द्वित्व। सच्चं। इल्ल-प्रत्यय होने पर सच्चिल्लं। लोकव्यवहार की बोलचाल में 'सचुला' प्रयोग होता है। अत उल्ल-प्रत्यय होने पर सच्चुल्लं। कप्रत्यय होने पर सच्चिल्लअं। पुंल्लिङ्ग में सच्चो, सच्चुल्लो। एवम् ( करभः ) २३ से भ को हकार। करहो। उल्लप्रत्यय होने पर करहुल्लो। कप्रत्यय होने पर करहुल्लओ। एवम् ( भ्रमरः ) भमरो, भमरुल्लो, भमरुल्लओ। रेफ-ककार का लोप। ओकार पूर्ववत् जानना। ३५ से इल्ल, उल्ल प्रत्यय होने पर प्रातिपदिक के अकार का लोप सर्वत्र जानना। स्वार्थ में कप्रत्यय होता है और ड-प्रत्यय भी होता है और उस ड-प्रत्ययान्त से कप्रत्यय विकल्प से होता है। ( पुत्र ) ५ से रेफलोप। ६ से द्वित्व। पुत्तो, पुत्तडो, पुत्तडओ। ( वत्स ) ६४ से त्स को छ। ६ से द्वित्व। ७ से चकार। वच्छो, वच्छडो, वच्छडओ। ( हस्तौ ) २९ से स्त को थकार। द्वित्व, तकार ६+७ से। द्विवचन को बहुवचन। हत्था, हत्थडा, हत्थडआ। 'कहीं पर स्वार्थ में द्वित्वापन्न लकार भी होता है।' ( एकः ) ४१ से विकल्प से ककारद्वित्व। एक्को, एक्को, एकल्लो, एकको, एकाकी। ( नव. ) २५ से न को ण। णवो, णवल्लो। उक्त इल्लादिक प्रत्यय पाणिनि ने जिन-जिन अर्थों में क-प्रत्यय कहा है उन-उन अर्थों में होते है। जैसे—अज्ञात, कुत्सित, अल्प, ह्रस्व, अनुकम्पा और संज्ञा अर्थ में होते हैं॥

नोट—न ( ५ ) सर्वत्र लवराम्। ( २ ) कगचजतदपयवां प्रायो लोप.। ( ६२ ) अत ओत्सो। ( ९ ) ऋतोऽत्। ( ३२ ) त्यथ्यद्यां चछजा.। ( ६ ) शेषादेशयोर्द्वित्वमनादौ। ( २३ ) खघथधभां ह.। ( ३५ ) सन्धौ अज्लोपविशेषा बहुलम्। ( ६४ ) श्चत्सप्सां छ। ( ७ ) वर्गेषु युज पूर्व.। ( २९ ) स्तस्य थः। ( २५ ) नो णः सर्वत्र।

## विद्युत्पीताभ्यां वा[1] लः ॥ २६ ॥

विद्युत्पीतशब्दाभ्यां परतः स्वार्थे लप्रत्ययो भवति। विज्जू ( ३-२७ द्य् = ज्, ३-५० जद्वि०, ५-१८ दीर्घः )। विज्जुली ( ईवन्तः स्त्रियां, शे० पू० )। पीअं ( २-२ त्लोपः, ५-३० बिं० )। पीअलं[2] (रूप०) ॥२६॥

विद्युत्पीतयोर्ल.[3]—एतयो स्वार्थे लप्रत्ययो वा स्यात्। विज्जुली, विज्जू। पीअलं, पीअ ॥ २६ ॥

विद्युत् और पीत शब्द से स्वार्थ में ल प्रत्यय विकल्प से हो। ( विद्युत् ) ३२ से द्य को जकार। ६० से अन्त्य त् का लोप। ६ से जकारद्वित्व। विज्जुली। ५२ से उकार-दीर्घ। विज्जू। ( पीतम् ) २ से तलोप, ल-प्रत्यय। पीअल, पीअं॥ २६॥

## वृन्दे वो रः ॥ २७ ॥

वृन्दशब्दे वकारात्परः स्वार्थे रेफो वा प्रयोक्तव्यः। व्रन्द्रं ( १-२७

१. वेति सार्वत्रिको न। २. क० पु० विद्युत्, पीतवर्ण इत्यर्थः। अ० पा०।
३ संजीवन्यादिसंमतोऽयं पाठः।

ऋ = अ, वकारात्परे रेफे कृते, ४–१७ वर्गान्तः, ५–३० विं० ) । वंद्रं[1] ( १–२७ ऋ = अ, शे० स्प० ) ॥ २७ ॥

बृन्दे द्रो वं[2]—बृन्दशब्दे दकारादनन्तरम् अकारात्पूर्वमित्यर्थ , वप्रत्यय- स्यात् । वन्द्र । 'बृन्दे र ' । २८ । इति केचित् । वन्द्र ॥ २७ ॥

बृन्दशब्द में दकार के अनन्तर अकार के पूर्व व-प्रत्यय हो । ९ से ऋकार को अकार । वन्द्रं । कोई र-प्रत्यय को मानते हैं । उनके मत से-वन्द्रं होगा ॥ २७ ॥

## करेण्वां रणोः स्थितिपरिवृत्तिः ॥ २८ ॥

करेणुशब्दे रेफणकारयोः स्थितिपरिवृत्तिर्भवति । कणेरू । पुंसि न भवति,[3] करेणू ( ५–१८ दीर्घः ) ॥ २८ ॥

करेण्वां रणोः स्थितिपरिवृत्ति'—करेणुशब्दे रेफणकारयो' स्थानव्यत्यय स्यात् । एसा कणेरू । स्त्रीलिङ्गनिर्देशात्पुंसि न । एस करेणू । ( हस्ती ) ॥ २८ ॥

करेणुशब्द में रेफ और णकार की स्थितिपरिवृत्ति हो अर्थात् रेफ के स्थान पर णकार और णकार के स्थान पर रेफ हो । ( करेणुः ) परिवृत्ति होने पर । कणेरू । हस्तिनी । 'करेण्वाम्' यह स्त्रीलिङ्ग का निर्देश है, अतः पुंलिङ्ग में नहीं होगा । एस करेणू = एष करेणु । हस्ती ॥ २८ ॥

## आलाने नलोः ॥ २९ ॥

आलानशब्दे लकारनकारयोर्हल्मात्रयोः स्थितिपरिवृत्तिर्भवति । आणालखम्भो ( ३–५७ सू० स्प० ) ॥ २९ ॥

आलाने लनो.—आलानशब्दे लकारनकारयो स्थानव्यत्यय स्यात् । आ- णाल । 'स्थितयो परिवृत्तिर्वा, हरिताले लरेफयो ' । हरिआलो, हलिआरो ॥ २९ ॥

आलानशब्द में लकार और नकार की परिवृत्ति हो । ( आलानम् ) ल के स्थान पर न और न के स्थान पर ल हो गया । २५ से न को ण । आणालं । 'हरिताल' शब्द मे रेफ और लकार का विकल्प से व्यत्यय होगा । ( हरितालम् ) २ से तलोप । हरिआलो, हलिआरो ॥ २९ ॥

## ( महाराष्ट्रे हरोः । )

महाराष्ट्रे हरो.[4]—अत्र हकाररेफयोर्व्यत्यय· स्यात् । मरहट्ठो ॥

महाराष्ट्रशब्द में हकार रेफ का व्यत्यय हो । ५ से रेफलोप । २८ से ष्ट को ठकार । ६ से द्वित्व । ७ से टकार । ५८ से दोनों आकारों को अकार । हकार-रेफ का व्यत्यय । मरहट्ठो ॥

## बृहस्पतौ बहोर्भओ ॥ ३० ॥

बृहस्पतिशब्दे बकारहकारयोर्यथासंख्यं भकाराकारौ भवतः । भअप्फई[5] ( १–१७ ऋ = अ, बह–इत्यस्य भअकृते, ३–३५ स्प = फ् , ३–५१ द्वि०, २–२ त्लोपः, ५–१८ दीर्घः ) ॥ ३० ॥

---

१ 'बृन्द विन्द' क्वचित्पाठः । २ एष पाठ. संजीवन्यनुसारी । ३. क्वचित् करेण्वामिति स्त्रीलिङ्गनिर्देशात् । अ० पा० । ४. नेदं सूत्रं मामहे । ५. का० पा० भअप्फई । सूत्रे हयौ इति पाठे हयप्फई इत्युदाहार्यम् ।

निषेधादिअइज्जयोरभाव । घेप्पइ । गृह्यते । पक्षे-'ग्रहेर्गेण्ह' । 'सन्धावज्लोप०' इत्यकारलोप । गेण्हिअइ, गेण्हिज्जइ । गृह्यते ॥ ६१ ॥

ग्रहेरिति । ग्रह धातु को भाव कर्म में घेप्प आदेश हो । 'नान्स्यद्धित्वे' से निषेध होने से इअइज्ज नहीं होंगे । घेप्पइ । गृह्यते । पक्ष में 'ग्रहेर्गेण्ह.' से गेण्ह आदेश होगा। 'यक इअइज्जौ' से इअ इज्ज होंगे। 'सन्धावज्लोपविशेषा बहुलम्' इससे अथवा 'क्वचिदपि लोप ' इससे अकार का लोप होगा । गेण्हिअइ, गेण्हिजइ । गृह्यते ॥ ६१ ॥

## क्तेन दिण्णादयः[1] ॥ ६२ ॥

**दिण्ण = इत्येवमादयः क्तप्रत्ययेन सह निपात्यन्ते । डुदाञ् दाने, दिण्णं ( रूप० ) । रुदिर् , रुण्णं ( पूर्व० रूप० ) । त्रसी,[2] हित्थं[3] (रूप०) । दह, दड्ढं[4] । रञ्जि, [5]रत्तं ( पू० रूप० ) ॥ ६२ ॥**

क्तेन दिण्णादय —डुदाञ् दाने, इत्यादीना धातूना क्तप्रत्ययेन सह दिण्ण इत्यादयो निपात्यन्ते । ये प्रत्ययलोपागमवर्णविकारलक्षणेन अनुपपन्नास्ते निपातनात्साध्यन्ते—

१ दत्त २ मुक्त ३ व्यतिक्रान्त ४ त्रस्तानाम् ५ उदितस्य च ।
१ दिण्ण २ मुत्त च ३ वोलीण ४ हित्थ ५ रुण्णा भवन्त्यमी ॥
६ दष्ट ७ दग्धा ८ ऽर्जित ९ ख्यात १० स्थापितानामिमे मता ।
६ डक्क ७ दड्ढ ८ विढत्त च ९ सखाद १० थाविअ तथा ॥
११ स्पष्टा १२ ऽऽस्वादित १३ नष्टाना स्यात १४ प्रसारित १५ लूनयो ।
११ छिविअ १२ चक्खिअ १३ लुक्क तथा १४ विसविअ १५ लुअ ॥
१६ आरब्धा १७ ऽर्पितयो स्याताम् १६ आढत्त च १७ विणाविअ ।
एव दिण्णादयोऽन्येऽपि दत्तादीना निपातिता ॥ ६२ ॥

क्तेनेति । डुदाञ् दाने, क्तप्रत्यय के सहित दा इत्यादिक धातुओं को अर्थात सिद्ध 'दत्त' इत्यादिक के स्थान पर 'दिण्ण' इत्यादिक निपात से हों । जो कार्य प्रत्यय से, लोप से, आगम से, वर्णविकार से अथवा सूत्र से उपपन्न नहीं होते है, वे सब निपात से सिद्ध कर लिये जाते है । जैसे १ दत्त को दिण्ण, २ मुक्त को मुत्त, ३ व्यतिक्रान्त को वोलीण, ४ त्रस्त को हित्थ, ५ उदित को रुण्ण, ६ दष्ट को डक्क, ७ दग्ध को दड्ढ, ८ अर्जित को विढत्त,[*] ९ ख्यात को सखाद, १० स्थापित को थविअ, ११ स्पष्ट को छिविअ, १२ आस्वादित को चक्खिअ, १३ नष्ट को लुक्क, १४ प्रसारित को विसविअ, १५ लून को लुअ, १६ आरब्ध को आढत्त, १७ अर्पित को विणाविअ, होते हैं । एव जैसे दत्तादिकों को दिण्णादिक होते हैं ऐसे ही अन्य भी होते हैं ॥ ६२ ॥

---

१ दिणादय इत्यपि-दिण, रुण । का० पा० । २ त्रसि-तिन्थ, तत्थ । का० पा० । ३ ( हित्थ व्रीडितभीतयो. ।) ४ दट्ठ-टढ्ढ-दढ । का० पा० । ५. रन्त, रत, रज्ज । दत्त-रुदित-त्रस्त-दग्ध-रक्त । का० पा० ।

## ( तक्षेरंपवच्छौ । )

तक्षेरंपवच्छौ[1]—तक्षे रंपवच्छ इत्यादेशौ स्त । तक्ष, त्वक्ष तनूकरणे । रपइ, वच्छइ । तक्ष्णोति, तक्षति वा ॥

तक्षेरिति । तक्ष धातु को रप-वच्छ आदेश हों । तनूकरण अर्थ में तक्ष धातु है । रप आदेश होने से रपइ, एवं वच्छ आदेश में वच्छइ । तक्ष्णोति तक्षति वा ॥

## खिदेर्विसूरः ॥ ६३ ॥

**खिद दैन्ये, अस्य विसूरो भवति । विसूरइ ( स्पष्टम् । अत्रोदाहरण-भूते प्राकृतपद्यखण्डे 'विरहेण, बाला' इत्येतौ शब्दौ संस्कृते प्राकृतसमौ, शेषो महिलावत् ? ) । विरहेण विसूरइ[2] बाला ॥ ६३ ॥**

खिदेर्विसूर—खिद्-धातोर्विसूर इत्यादेश स्यात् । विसूरइ, विसूरेइ । खिद्यते । अत्रापि बहुलग्रहणानुवृत्ते 'खिज्ज' इत्यादेश । खिज्जइ । वसन्तराजस्तु दैवादिकत्वात् श्यनि, 'त्यथ्यद्यां चछजा ' इति जकारे, 'शेषादेशयो'रिति जकारद्वित्वे खिज्जइ-इत्याह । तन्मते क्तप्रत्यये खिजिअ नैव सेत्स्यति ॥ ६३ ॥

खिदेरिति । खिद् दैन्ये, खिद धातु को विसूर आदेश हो । 'लादेशे वा' से विकल्प से एकार, विसूरेइ । पक्ष में विसूरइ । खिद्यते । इस सूत्र में भी बहुल-पद की अनुवृत्ति करके बहुलग्रहण से खिद को खिज्ज आदेश होगा । खिज्जइ । क्तप्रत्यय मे खिजिअ होगा । वसन्तराज खिदधातु से श्यन् , 'त्यथ्यद्या' से जकार, शेषादेशयो॰' से द्वित्व, खिज्जइ-मानते है, उनके मत से क्तप्रत्ययादि में खिज्ज आदश न होने से खिजिअ नही होगा ॥ ६३ ॥

## क्रुधेर्जूरः[3] ॥ ६४ ॥

**क्रुध कोपे, अस्य जूरो भवति । जूरइ[4] (पू० ति, त = इ, शे० स्प०) ॥**

क्रुधेर्जूर—क्रुधधातोर्जूर इत्यादेश स्यात् । क्रुध कोपे । जूरइ । क्रुध्यति ॥ ६४ ॥

क्रुधेरिति । क्रुध धातु को जूर आदेश हो । क्रुध कोप करने के अर्थ में है । जूर आदेश । जूरइ, क्रुध्यति ॥ ६४ ॥

## चर्चेश्चम्पः ॥ ६५ ॥

**चर्च अध्ययने, अस्य धातोश्चम्पो भवति । चम्पइ[5] (स्पष्टम्) ॥ ६५ ॥**

चर्चेश्चर[6]—चर्चि-इति ण्यन्तस्य निर्देश । चर्च अध्ययने, ण्यन्तस्य चर्च-धातो चर इत्यादेश स्यात् । चरइ । चर्चयति । वक्तीत्यर्थ । चरिअइ, चरिज्जइ, चर्च्यते ॥

चर्चेरिति । चर्चि यह ण्यन्त का सूचक है । चर्च धातु पढ़ने के अर्थ में है । ण्यन्त चर्च धातु को चर आदेश हो । चरइ । चर्चयति=अध्यापयति । विचारता है, पढ़े हुए पाठ को फिर से विचारता है । कर्म में प्रत्यय करने पर 'यक इअइज्जौ' से इअइज्ज आदेश । चरिअइ, चरिज्जइ । चर्च्यते ॥ ६५ ॥

---

१ भामहे नेदमुपलभ्यते सूत्रम् । २ खिद्यति । ३ झूठ । ४ क्रुद्ध्यति ।
५ चर्चयते । ६ सजीवन्यादिसमत. पाठ ।

## त्रसेर्वज्जः ॥ ६६ ॥

**त्रसी उद्वेगे, अस्य धातोर्वज्जो भवति। वज्जइ[1] (पू० स्प०) ॥ ६६ ॥**

त्रसेर्वज्ज —इक्तिपौ धातुनिर्देशे। त्रस धातोर्वज्ज इत्यादेश स्यात्। वज्जइ। त्रस्यति, त्रसति वा ॥ ६६ ॥

त्रसेरिति। त्रस धातु घबड़ाने के अर्थ में है। त्रस को वज्ज आदेश हो। वज्जइ। त्रस्यति, त्रसति वा ॥ ६६ ॥

## मृजेर्लुभसुपौ[2] ॥ ६७ ॥

**मृजू शुद्धौ, अस्य धातोर्लुभ, सुप इत्यादेशौ भवतः। लुभइ, सुपइ[3] (स्प०) ॥ ६७ ॥**

मृजेर्लुभपुसौ[4]—मृजूष् शुद्धौ, मृज-धातोर्लुभ-पुस इत्यादेशौ स्त। लुभइ, पुसइ। मार्ष्टि। सदानन्दस्तु-मृजेर्लुहलुभौ-इत्येव सूत्रपाठ मन्यते। तन्मते-लुहइ, लुभइ-इत्युदाहर्तव्यम् ॥ ६७ ॥

मृजेरिति। मृज धातु शुद्धि करने के अर्थ में है। मृज धातु को लुभ पुस आदेश होते है। लुभइ, पुसइ। 'लादेशे वा' से एकार। लुभेइ, पुसेइ। मार्ष्टि। सदानन्द 'मृजेर्लुहलुभौ' ऐसा सूत्रपाठ मानते हैं। अत उनके मत से लुहइ, लुभइ रूप होंगे। भकारोच्चारणसामर्थ्य से 'खघथ०' से भ को ह नहीं होगा। मार्ष्टि ॥ ६७ ॥

## वुड्डखुप्पौ मस्जेः[5] ॥ ६८ ॥

टुमस्जो शुद्धौ, अस्य धातोर्वुड्डखुप्पौ भवत। वुड्डइ, खुप्पइ[6] (पू० स्प०) ॥ ६८ ॥

वुड्डखुप्पौ मज्जे[7]—मस्जधातोर्वुड्डखुप्प इत्यादेशौ स्त। टुमस्जो शुद्धौ। वुड्डइ, खुप्पइ। 'ब्रुड निमज्जने' इत्यस्य 'सर्वत्र लवरा'मिति रेफलोपे 'सेवादिषु चे'ति डकारस्य द्वित्वे कृते वुड्ड इति सेत्स्यति। पुन सूत्रे वुड्डग्रहण चिन्त्यप्रयोजनम्। शुद्धि निमज्जन च समानार्थे ॥ ६८ ॥

वुड्डेति। मस्ज धातु शुद्धि के अर्थ में है, शुद्धयर्थक मस्ज धातु को वुड्ड खुप्प आदेश होते हैं। वुड्डइ, खुप्पइ। 'लादेशे वा' से सर्वत्र एत्व जानना। मज्जति। ब्रुड धातु निमज्जन अर्थ में है। उसको 'सर्वत्र लवराम्' से रेफलोप, 'सेवादिषु च' से डकार को द्वित्व करने से वुड्डइ सिद्ध हो जायगा, फिर सूत्र में वुड्ड-ग्रहण निष्प्रयोजन है। शुद्धि और स्नान एकार्थक हैं। क्तप्रत्यय में उभयत वुड्डिअ होगा ॥ ६८ ॥

## दृशेः पुलअणिअक्कअवक्खाः[8] ॥ ६९ ॥

---

१ त्रस्यति = त्रसति। २ मृजेर्जूमवुसौ। जूमइ-वुसइ। का० पा०। ३ मार्ष्टि। ४ सजीवन्यादिसमत एष पाठः। ५ वुत्त, वुत्था। वुत्तइ, वुत्थइ। ६. मज्जति। ७. सजीवन्यादिसमत एष पाठः। ८. दृशेर्दीसपुलगिच्छावक्खाः। दीसइ, पुलइ, णिच्छइ, अवक्खइ। दृश्यते। का० पा०।

दृशिर् प्रेक्षणे, अस्य पुलअ-णिअच्छ-अवक्खा भवन्ति । पुलअइ । णिअच्छइ । अवक्खइ[1] ( स्पष्टम् ) ।। ६९ ।।

दृशेः पुलअ-णिअच्छ-अवक्ख-सच्चवाः[2]—दृश्-धातोः पुलअ, णिअच्छ, अवक्ख, सच्चव इत्येते आदेशा भवन्ति । दृशिर् प्रेक्षणे । पुलअइ । 'लादेशे वा' इत्यनेन एकारः, पुलएइ । एव-णिअच्छइ, णिअच्छेइ । अवक्खइ, अवक्खेइ । सच्चवइ, सच्चवेइ-इत्यादिष्वपि ज्ञेयम् । ननु पलोएइ इति कथम् ? तत्तु प्रपूर्वकस्य लोकृ दर्शने इत्यस्य स्वार्थे णिजन्तस्य ज्ञेयम् ।। ६६ ।।

दृशेरिति । दृश धातु देखना अर्थ में है । दृश धातु को पुलअ, णिअच्छ, अवक्ख और सच्चव ये आदेश होते हैं । पुलअइ । 'लादेशे वा' से विकल्प से एकार होगा । पुलएइ । एवम्-णिअच्छइ, णिअच्छेइ । अवक्खइ, अवक्खेइ । सच्चवइ, सच्चवेइ-इत्यादिकों में भी जानना । ननु० प्रश्न यह होता है कि यदि दृश धातु को पूर्वोक्त ही आदेश होंगे किन्तु 'लोअ' आदेश नहीं होगा तो 'पलोएइ' यह प्रयोग नहीं होगा । उत्तर यह है कि यह प्रयोग दृश धातु का नहीं है, किन्तु दर्शन अर्थ में प्रपूर्वक लोक धातु का है । स्वार्थ में णिच्-प्रत्यय । 'णिच एदादेरात्' से एकार । 'कगचज०' से ककारलोप । 'सर्वत्र लवराम्', 'ततिपोरिदेतौ' से पलोएइ होगा ।। ६९ ।।

## शकेस्तरवअतीराः ।। ७० ।।

शक्लृ शक्तौ, अस्य धातोः तर, वअ, तीर इत्येत आदेशा भवन्ति । तरइ, वअइ, तीरइ[3] ।। ७९ ।।

शकेस्तर-वअ-तीराः—शक्लृ धातोः तर, वअ, तीर इत्येते त्रय आदेशा भवन्ति । तरइ, वअइ, तीरइ । शक्नोति । भावे—'यक इअइज्जौ' इति इअ-इज्जादेशे तरिज्जइ, वइज्जइ, तीरिज्जइ । शक्यते ।। ७० ।।

शकेरिति । शक धातु को तर, वअ, तीर ये तीन आदेश होते हैं । साधुत्व पूर्ववत् । भाव में 'यक इअइज्जौ' से इअइज्ज आदेश होंगे । 'सन्धावज्लोप०' से अकारलोप । तरिअइ, तरिज्जइ । एवम्-वइअइ, वरिज्जइ। तीरिअइ, तीरिज्जइ । शक्यते इत्यर्थः ।।७०।।

## ( एवमन्येऽपि । )

एवमन्येऽपि[4]—एवम् अनेन प्रकारेण यथा पूर्वोक्ताना भूधातो होहुवौ आदेशौ विहितौ, तथैव अपरेषामपि धातूनां यथादर्शनम् आदेशा कल्पनीया । यथा-लवि अवस्रंसने । विपूर्वस्य लविधातोः 'थक्क' इत्यादेशः । थक्कइ । विलम्बते । यथादर्शनम् इति नियमात् कचिद् धातोरेव थक्कादेशः । विथक्कन्तो । विलम्बमानः । स्रस धातोः 'विस्रवि' इत्यपि आदेशः इति सदानन्दः । विस्रविइ । उपवेशने आस्-धातोः अच्छ इत्यादेशः । अच्छइ । आस्ते । अच्छन्तो । आसीनः । प्रेरणे क्षिपः छुह इति । छुहइ । क्षिपति । वाछि (वाञ्छ) इच्छायाम्, वाञ्छधातोः मह-वच्छ इत्यादेशौ भवतः । महइ ।

---

१. पश्यति । २ संजीवन्यादिसंमत एष पाठः । ३. शक्नोति । ४. भामह-वृत्तौ नेदं सूत्रम् ।

वछइ । वाञ्छति । आङ्पूर्वकस्य सेवार्थस्यश्रिञ्धातो अणि-अल्लि इत्यादेशौ । अणिअइ, अल्लिअइ वा । आश्रयति । रक्षणे गुप्धातो लूम इति । लूमेइ । जिधातो जअ इति आदेश । जअइ । जयति । स्थग संवरणे । स्वार्थे णिजन्तस्य स्थग-धातो ढक्क इत्यादेश । ढक्कइ । स्थगयति । हि गतौ । प्रपूर्वकस्य हिधातो पिणव इत्यादेश । पिणवइ । प्रहिणोति । भुजधातो जेंव इति । जेंवइ । भुङ्क्ते । जेमइ इति तु-जिमु अदने, 'अत्रादेशा बहुलम्' इत्येत्वे । जेमइ । जेमति । बहुलग्रहणानुवृत्त क्वचिद् विकल्पेन थक्कादयो भवन्ति । विलम्बइ, थक्कइ वा । विलम्बते । छुहइ, खिवइ । क्षिपति । भावकर्मणोरपि दीसइ । दृश्यते । अर्ज अर्जने । विढप्पइ । अर्ज्यते । आङ्पूर्वकस्य रभ्धातो -आढप्पइ । आरभ्यते । क्त्वाप्रत्ययेऽपि-थक्किऊण । स्था-धातो थक्क इत्यादेश । स्थित्वा, विलम्ब्येति वा । छुहिऊण । क्षिप्त्वा । ढक्किऊण । स्थगयित्वा । क्तप्रत्ययेऽपि-लूमिअ । गोपायितम् । महिअ । वाञ्छितम् । ढक्किअ । स्थगितम् । पिणुविअ । प्रहितम् । 'पण्णविअ' इति सदानन्दः, तेन पण्णविअ। प्रहितम्। एव प्रत्ययान्तरेऽपि धात्वन्तराणाम् आदेशा ऊह्या । केचित्तु-'एवमन्येऽपि' इति सूत्रे क्रियापदमेव व्याचक्षते । तन्न युक्तम् । अक्रियापदानामपि आदेशविधानदर्शनात् । उदाहृत चैवमेव । ननु यद्येवम्, तर्हि 'क्तेन दिण्णादय' इति सूत्र व्यर्थं स्यात् ? इति चेन्न, तत्र क्तेनेति सहार्थे तृतीया । तेनाप्ययमर्थ-क्तप्रत्ययसहिताना धातूना दिण्णादय । अत्र तु केवलाना धातूनामिति नानर्थकत्वम् ॥

एवमिति । जैसे भूधातु को हो हुव आदेश कहे है, इसी प्रकार अन्य धातुओं को भी कविप्रयोगानुकूल, व्यवहृतप्रयोगानुकूल धात्वादेश की कल्पना कर ले । अत्र स्रंसन अर्थ मे लबिधातु है । उपसर्गसहित विपूर्वक लबिधातु को थक्क आदेश । थक्कइ । विलम्बते । 'यथादर्शनम्' इस कथन से कहीं उपसर्ग रहित धातुमात्र को थक्क आदेश होगा । विथक्कन्तो । विलम्बमान । 'न्तमाणौ शतृशानचो' से न्त आदेश । स्रंस् को विअवि आदेश । विअविइ । स्रंसते । आस को अच्छ । अच्छइ । आस्ते । अच्छन्तो, आसीन । प्रेरण अर्थ में क्षिप धातु को छुह आदेश । छुहइ । क्षिपति । वांछि को मह-वछ ये दो आदेश होंगे । महइ, वछइ । वाञ्छति । श्रिधातु सेवा अर्थ मे है । आङ् पूर्वक श्रिधातु को अणि-अल्लि आदेश होंगे । अणिअइ, अल्लिअइ । आश्रयतीत्यर्थ । गुप धातु को लूम आदेश होगा । लूमइ । गोपायति । जि को जअ आदेश । जअइ । जयति । स्थग-धातु संवरण=ढाँकना अर्थ में है । स्वार्थ में णिच् । णिजन्त स्थग धातु को ढक्क आदेश । ढक्कइ, ढक्केइ । 'लादेशे वा' से एत्व । स्थगयति । ढाँकता है । प्रपूर्वक हिधातु को पिणव आदेश । पिणवइ । प्रहिणोति । भेजता है । भुजधातु को जेंव आदेश । जेंवइ । भुङ्क्ते । प्रश्न यह है कि जेमइ यह अनुनासिकरहित मकारयुक्त कैसे होगा ? उत्तर यह है कि यह भुज धातु का नहीं है, किन्तु अदन= भोजन अर्थ में जिम् धातु का है । 'अत्रादेशा बहुलम्' से इकार को एकार । 'शेषाणामदन्तता' से अकारान्त । जेमइ । जेमति । उक्त सूत्र में बहुलपद की अनुवृत्ति करके यह अर्थ करना कि-थक्कादिक आदेश कहीं विकल्प से होंगे । विलम्बइ, थक्कइ वा ।

छिलम्बते । छुहइ, पक्ष में-छिवइ । 'खघथधभां हः' से ह आदेश । 'पो वः' से व । 'शेषाणामदन्तता' से अदन्तता । छिवइ । छिपति । भावकर्म में भी ये आदेश होते हैं । दीसइ, दृश्यते । विढप्पइ, अर्ज्यते । आङ्पूर्वक रभ् धातु को आढप्प आदेश । आढप्पइ, आरभ्यते । क्त्वा-प्रत्यय के परे भी ये आदेश होंगे । स्था धातु को थक्क आदेश । थक्किऊण, स्थित्वा । अथवा विपूर्वक लम्बिधातु को थक्कादेश । थक्किऊण । विलम्ब्येत्यर्थः । छुहिऊण, क्षिप्त्वा । ढक्किऊण, स्थगयित्वा । क्तप्रत्यय में भी ये आदेश होंगे । गुपधातु को लुम आदेश । 'क्ते' सूत्र से इकार । 'कगचज०' से तकारलोप । लुमिअ, गोपायितम् । महिअ, वाञ्छितम् । ढक्किअं, स्थगितम् । प्रपूर्वक हिधातु को पिणुव आदेश । साधुत्व पूर्ववत् । पिणुविअं । सदानन्द पण्णव आदेश मानते हैं, अत: उनके मत से पण्णविअ । प्रहितम् । इसी प्रकार दूसरे प्रत्ययों के संयोग में भी आदेशों की कल्पना कर लेना । कोई कोई आचार्य 'एवमन्येऽपि' सूत्र में क्रियापद की व्याख्या करके क्रिया को ही आदेश मानते हैं, यह ठीक नहीं है, क्योंकि अक्रियापद को भी आदेश विधान है, इसी प्रकार के उदाहरण हैं । ननु प्रश्न यह होता है कि यदि 'एवमन्येऽपि' से सब प्रकार के आदेश हो जायँगे तो 'क्तेन दिण्णादयः' यह सूत्र व्यर्थ हो जायगा ? उत्तर-यह कहना ठीक नहीं है । क्योंकि 'क्तेन दिण्णादयः' इस सूत्र में 'क्तेन' यहाँ सहार्थ में तृतीया है, तो यह अर्थ होता है कि—क्तप्रत्यय के सहित दाधातु को दिण्ण आदेश हो । तो यहाँ केवल धातु को आदेश कहे हैं और यहाँ क्तप्रत्ययसहित को । इस प्रकार अनर्थकत्व की शङ्का नहीं हो सकती ॥

## शेषाणामदन्तता ॥ ७१ ॥

इति श्रीवररुचिकृतेषु सूत्रेष्वष्टम परिच्छेद ।

**शेषाणां लुप्तानुबन्धानामदन्तता भवति । भमइ । चुम्बइ[1] ॥ ७१ ॥**

**[ एवमन्येऽपि क्रियाशब्दादेशा ज्ञेयाः । यथा—मृजेः जामइ, पिबतेः पाइइ[2] ] ।**

इति श्रीभामहविरचिताया मनोरमाव्याख्यायां धात्वादेशपरिच्छेदोऽष्टम[3] ॥

---

१ भ्रमति । चुम्बति । २ [ ] अयं पाठो न सार्वत्रिक । ३ अत्र प्रकरणान्ते ग्रन्थान्तरेभ्य आवश्यकतया धातुविहितप्रत्ययादेशा धात्वादेशाश्चोल्लिख्यन्ते सङ्क्षेपेण । तत्र पूर्वं धातुविहितप्रत्ययाऽऽदेशा.—

सिनास्ते सिः ।८।३।१४६ सिना द्वितीयत्रिकादेशेन सह अस्ते सिरादेशो भवति । निठुरो जं सि । सिनेति किम् ? से आदेशे सति—अत्थि तुम ।

गुर्वादेरविर्वा ।८।३।१५०। गुर्वादेर्णे. स्थाने अवि इत्यादेशो वा भवति । शोषितम्=सोसविअं, सोसिअ । तोषितम्=तोसविअ, तोसिअ ।

भ्रमेराडो वा ।८।३।१५१। भ्रमे॰ परस्य णेराड आदेशो वा भवति । भमाडेइ । पक्षे—भामेइ, भमावइ, भमावेइ । ( भ्रमयति ) ।

हु-सु-मु विध्यादिष्वेकस्मिंस्त्रयाणाम् ।८।३।१७३। विध्यादिष्वर्थेषूत्पन्नानामेकत्वेऽर्थे वर्तमानाना त्रयाणामपि त्रिकाणा स्थाने यथासंख्यं हु, सु, मु इत्येते आदेशा भवन्ति । हसउ सा । हससु तुमं । हसामु अहं । दकारोच्चारणं भाषान्तरार्थम् ।

शेषाणामदन्तता—विहितादेशेभ्यो धातुभ्योऽन्ये ये अकृतादेशा हलन्ता धातव', तेषामदन्तता स्यात्'। हसइ, हसेइ। 'लादेशे वा' इत्येत्वम्। हसति। हसिओ। हसितः। अदन्तत्वे 'क्ते' इतीकार'। हसिऊण। हसित्वा। एवम्-रूसइ, रूसामि, रूसामहे। अदन्तत्वे 'अत' इत्यधिकारविहितानि सर्वाणि कार्याणि भवन्ति॥ ७१॥

शेषाणामिति। जिन धातुओं को आदेश कहे हैं उनसे अतिरिक्त हलन्त धातुओं को, क्योंकि भुवादिक आदेश जो होते हैं वे अदन्त ही को होते हैं। अत' आदेश से अतिरिक्त अर्थात् हलन्त धातुओं को अदन्तता हो। जैसे—हस्-हलन्त सकारान्त अकारान्त हो जाने से 'लादेशे वा' से एकार। हसेइ, हसइ। क्त-प्रत्यय में 'क्ते' से इकार। हसिओ। क्त्वा-प्रत्यय में 'ए च क्त्वा तुमन्-तव्य-भविष्यत्सु' से एकार और

---

सोर्हिर्वा।८।३।१७४। पूर्वसूत्रविहितस्य सो स्थाने हिरादेशो वा भवति। देहि। देसु।

अत इज्जस्विज्जहीज्जे लुको वा। ८।३।१७५। अकारात्परस्य सो इज्जसु, इज्जहि, इज्जे इत्येते लुक् च आदेशा वा भवन्ति। हसेज्जसु। हसेज्जहि। हसेज्जे। हस। पक्षे-हससु। अत इति किम्? होसु।

क्रियातिपत्तेः।८।३।१७९। क्रियातिपत्ते स्थाने ज्ज-ज्जावादेशौ भवत। होज्ज, होज्जा। अभविष्यदित्यर्थः। जइ होज्ज वण्णणिज्जो।

न्तमाणौ।८।३।१८०। क्रियातिपत्ते स्थाने न्त-माणौ आदेशौ भवत। होन्तो। होमाणो। अभविष्यदित्यर्थः।

क्यङोर्यलुक्।८।३।१३८। क्यङन्तस्य क्यजन्तस्य वा सम्बन्धिनो यस्य लुग् भवति। गरुआइ, गरुआअइ। अगुरुर्गुरुर्भवति, गुरुरिवाचरति वेत्यर्थः। क्यच्। लोहिआइ। लोहिआअइ।

क्ते।८।३।१५६। क्ते परत अत इत्व भवति। हसिअ। पढिअ।

अदेल्लुक्यादेरत आः। ८।३।१५३। णेरदेल्लोपेषु कृतेषु आदेरकारस्य आ भवति। अति पाडइ। मारइ। एति-कारेइ। खामेइ। लुकि-कारिअं। खामिअं। कारीअइ। खामीअइ। कारिज्जइ। खामिज्जइ। अदेल्लुकीति किम्? कराविज्जइ। करावीअइ। आदेरिति किम्? सङ्गामेइ-इह व्यवहितस्य मा भूत्। कारिअ-इहान्त्यस्य मा भूत्। अत इति किम्? दूसेइ। केचित्तु-आवे-आव्यादेशयोरप्यादेरत आत्वमिच्छन्ति। कारावेइ। हासाविओ जणो सामलीइ

णेरदेदावावे।८।३।१४९। णेः स्थाने अत्, एत्, आव, आवे एते चत्वार आदेशा भवन्ति। दरिसइ। कारेइ। करावइ। करावेइ। हासेइ। हसावइ। हसावेइ। बहुलाधिकारात् क्वचिदेन्नास्ति। जाणावेइ। क्वचिद् आवे नास्ति। पाढइ। मावेइ।

दृशिवचेर्डीसडुच्चं।८।३।१६१। दृशेर्वचेश्च परस्य क्यस्य स्थाने यथासंख्यं डीस, डुच्च इत्यादेशौ भवत'। ईअइज्जापवाद। दीसइ। वुच्चइ।

सी-ही-हीअ भूतार्थस्य।८।३।१६२। भूतेऽर्थे विहितोऽद्यतनादिः प्रत्ययो भूतार्थः, तस्य स्थाने सी-ही-हीअ इत्यादेशा भवन्ति। उत्तरत्र व्यञ्जनादीअ(१)विधानात्स्वरान्तादेवाय

---

१. 'व्यञ्जनादीअ' इत्यनेन—हुवीअ। (अभूत्-अभवत्—बभूव)। अच्छीअ। (आसिष्ट, आस्त, आसांचक्रे) इत्यादिषु व्यञ्जनान्तादीअ-विधानं वेदितव्यम्। प्राकृतप्रकाशे चैतद् ७-२३ सूत्रे स्पष्टम्।

इकार । हसेऊण, हसिऊण होंगे । एवं हसामि में 'अत आ मिपि वा' से आकार । पक्ष में-हसेमि । बहुवचन में 'इच्च बहुषु' से आकार, इकार । तात्पर्य यह है कि अदन्त हो जाने से 'अत' इस अधिकार में जितने कार्य विहित हैं, वे सब होंगे ॥ ७१ ॥

## ( अनदन्तानामद्वा । )

अनदन्तानामद्वा[1]—अदन्तरहिताना स्वरान्तानाम् अकारागमो वा भवति । 'भियो भावीहौ' इति भादेश. । भाइ, भाअइ । बिभेति । होइ, होअइ । भवति ॥

अनदन्तेति । अदन्त से रहित स्वरान्त धातुओं के आगे अकार का आगम होता है । जैसे-भी धातु को भा आदेश होने पर भाइ होगा । विकल्प से अकारागम होने पर भाअइ । बिभेति । एव भू को हो आदेश, होइ, होअइ । भवति ॥

## ( अडादेशा बहुलम् । )

अडादेशा बहुलम्[2]—अटश्च आदेशाश्चेति द्वन्द्व । अट् इति पाणिनीयप्रतिपादितः

---

विधि । कासी । काही । काहीअ । अकार्षीत्, अकरोत्, चकार वेत्यर्थ. । एव ठासी । ठाही । ठाहीअ ।

कृदोहं । ८ । ३ । १७० । करोतेर्ददातेश्च परो भविष्यति विहितस्य म्यादेशस्य स्थाने हं वा प्रयोक्तव्य । काहं । दाहं । करिष्यामि । दास्यामीत्यर्थ । पक्षे-काहिमि । दाहिमि । इत्यादि ।

अधुना धात्वादेशा. प्रदर्श्यन्ते—

भुवेर्हो-हुव-हवा ।८।४।६०। भुवो धातोर्हो, हुव, हव इत्येते आदेशा वा भवन्ति (३) । होइ । होन्ति । हुवइ । हुवन्ति । हवइ । हवन्ति । पक्षे-भवइ । परिहीणविहवो । क्वचिदन्यदपि । उब्भुअइ । भत्त । भुत्त ।

अविति हु ।८।४।६१। विद्वर्जे प्रत्यये भुवो हु इत्यादेशो वा भवति । हुन्ति । भवन् । ( भुवन् ) हुन्तो । अविति किम् ? होइ

पृथक् स्पष्टे णिव्वडः ।८।४।६२। पृथक्-भूते स्पष्टे च कर्तरि भुवो णिव्वड इत्यादेशो भवति । णिव्वडइ । पृथक् स्पष्टो वा भवतीत्यर्थः ।

प्रभौ हुप्पो वा ।८।४।६३। प्रभुकर्तृकस्य भुवो हुप्प इत्यादेशो वा भवति । प्रभुत्व च प्रपूर्व-स्यैवार्थ । अङ्गे च्चिअ न पहुप्पइ । पक्षे-पभवेइ ।

सम्भावेरासङ्घ ।३५। आसङ्घइ । सम्भावइ ।

कथेर्वज्जर-पज्जर-उप्पाल-पिसुण-सङ्घ-बोल्ल-चव-जम्प-सीस-साहाः ।८।२। वज्जरइ । पज्जरइ । उप्पालइ । पिसुणइ । सङ्घइ । बोल्लइ । चवइ । जम्पइ । सीसइ । साहइ । पक्षे-कहइ । एते चाऽन्यैर्देशीषु पठिता अपि अत्र धात्वादेशीकृता विविधेषु प्रत्ययेषु प्रतिष्ठन्तामिति । तथाच-वज्जरिओ, कथितः । वज्जरिऊण, कथयित्वा । वज्जरणं, कथनम् । वज्जरन्तो, कथयन् । वज्जरिअव्वं, कथयितव्यम् । इति रूपसहस्राणि सिद्ध्यन्ति । संस्कृतधातुवच्च प्रत्ययलोपाग-मादिविधिः ।(४)

दुःखे णिव्वरः ।३। णिव्वरइ । दुःखं कथयतीत्यर्थः ।

---

१, २. इमे सूत्रे न स्तो भामहवृत्तौ ।

३. 'भवतेर्होहुवौ स्याताम्' इति प्राकृतसर्वस्वम् ।

४. 'कथादीनां च प्रायः प्रयोगो नास्ति' इति हेमः ।

प्रत्याहारः । 'अइउण्, ऋलृक्, एओङ्, ऐऔच्, हयवरट्' । अनुबन्धवर्जित एतदात्मको ग्राह्य । आदेशा 'भुवो हो हुवौ' इत्यादय प्रतिपादिता', ते बहुलम् अनेकप्रकारा भवन्ति । बहुलस्वरूप दर्शयति—

क्वचित्प्रवृत्ति, क्वचिदप्रवृत्ति', क्वचिद् विभाषा, क्वचिदन्यदेव ।
विधेर्विधान बहुधा समीक्ष्य चतुर्विध बाहुलक वदन्ति ॥

अटस्तावत्—धावु गतिशुद्धयो । अत्र आकारस्य ओकार । धोवइ । धावति । अत्र शुद्धौ एव ओकार । गतौ तु धावइ इत्येव । ञिष्वप् शयने । शषो' स । सर्वत्र लवराम् । पो व । शेषाणामदन्तता । ततिपोरिदेतौ । सवइ-जाते अडादेशा बहुलम् इति अकारस्य ओकार उकारश्च । सोवइ, सुवइ । स्वपिति । एवम्-एइ । इण्धातो

---

जुगुप्सेर्झुण-दुगुच्छ-दुगुञ्छा ।४। झुणइ । दुगुच्छइ । दुगुञ्छइ । पक्षे-जुगुच्छइ । गलोपे-दुउच्छइ-दुउञ्छइ-जुउच्छइ ।

बुभुक्षि-वीज्योर्णीरव-वोज्जौ ।५। बुभुक्षेराचारक्विबन्तस्य च वीजे । णीरवइ । बुभुक्खइ । वोज्जइ । वीजइ ।

उदो ध्मो धुमा ।८। उधुमाइ ।

श्रदो धो दह ।९। सद्दहइ । सद्दहमाणो जीवो ।

पिबे. पिज्ज-डल्ल-पट्ट-घोट्टा ।१०। पिज्जइ । डल्लइ । पट्टइ । घोट्टइ । पक्षे-पिअइ ।

उद्वातेरोरुम्मावसुआ ।११। ओरुम्माइ । वसुआइ । उव्वाइ ।

निद्रातेरोहीरोङ्घौ ।१२। ओहीरइ । उङ्घइ । निद्दाइ ।

आघ्रेराइग्घ । १३ । आइग्घइ । अग्घाइ । आजिघ्रतीत्यर्थ ।

स्नातेरभुत्त ।१४। अभुत्तइ । ण्हाइ ।

सम स्त्य. खा ।१५। संखाइ ।

स्थष्ठा-थक्क-चिट्ठ-निरप्पा । १६ । ठाइ । ठाअइ । ठाण । पट्ठिओ । उट्ठिओ । पट्ठाविओ । उट्ठाविओ । थक्कइ । चिट्ठइ । चिट्ठिऊण । निरप्पइ । बहुलाधिकारात्क्वचिन्न भवति-थिअ । थाण । पत्थिओ । उत्थिओ । थाऊण ।

उदष्ठ-कुक्कुरौ ।१७। उठ्ठइ । उकुक्कुरइ ।

म्लेर्वा-पव्वायौ ।१८। वाइ । पव्वायइ । मिलाइ । म्लायत इत्यर्थ ।

निर्मो निम्माण-निम्मावौ ।१९। निम्माणइ । निम्मवइ ।

क्षेर्णिज्झरो वा ।२०। णिज्झरइ । पक्षे-झिज्जइ ।

छदेर्णुम-नूम-सन्नुम-ढक्कौम्बाल-पव्वाला. ।२१। नुमइ । नूमइ । णत्वे-णूमइ । ढक्कइ । ओम्बालइ । पव्वालइ । छायइ ।

निवृपत्योर्णिहोड ।२२। निवृञ. पतेश्च ण्यन्तस्य । णिहोडइ । पक्षे-निवारेइ । पाडेइ ।

धवलेर्दुम. ।२४। ण्यन्तस्य । दुमइ । धवलइ । दीर्घत्वमपि(१) । दूमिअ । धवलितमित्यर्थः ।

तुलेरोहाम ।२५। ण्यन्तस्य । ओहामइ । तुलइ ।

मिश्रेर्वीसाल-मेलवौ ।२८। ण्यन्तस्य । वीसालइ । मेलवइ । मिस्सइ ।

---

१ 'स्वराणां स्वरा'' इति बाहुलकाद् इति भाव ।

इकारस्य एकारः । एति । देइ । ददाति । धेइ । ईकारस्य एकारः । भवति । रुदिर् अश्रुविमोचने, 'रुदो व' इति वकारः । शेषाणामदन्तता । अत्र उकारस्य वा ओकारः । रोवइ । पक्षे—रुवइ । णसइ । शषो स । नो णः । अकारस्य आकारः । नश्यति ।

अथादेशा —'स्मरतेर्भरसुमरौ' इति यदुक्त तद् विकल्प्यते, तेन—'अधो मनया'मिति मलोपे अन्ते अरः । सरइ, इत्यपि ज्ञेयम् । 'बुड्डखुड्डौ मस्जे'रित्यपि विकल्प्यते । ततो मज्जइ, मज्जेइ, इत्यपि । एवं-'तक्षे रपवच्छौ' इत्यत्रापि बाहुलकाद् विभाषा । ततः तक्खइ इति । तक्ष्णोति । 'शकेस्तर-वअ-तीरा ' इदमपि विकल्प्यते । तेन सक्कइ इति । शक्नोति । 'क्षियो झिज्ज ' अस्यापि वैकल्पिकत्वात्, पक्षे खिअइ इति । क्षयति । क्वचिदन्यदेव-यथा—'ठाझागाश्च भविष्यद्वर्तमानविध्याद्येकवचने' इति भविष्यदाद्येकवचने ठा-झा-गा

---

भ्रमेस्तालिअण्ठ-तमाडौ ।३०। ण्यन्तस्य । तालिअण्टइ । तमाडइ । भामेइ । भमाडेइ । भमावेइ ।

दृशेर्दाव-दस-दक्खवा ।३२। ण्यन्तस्य । दावइ । दसइ । दक्खवइ । दरिसइ ।

स्पृहः सिहः ।३४। ण्यन्तस्य । सिहइ ।

यापेर्जव ।४०। जवइ । जावेइ ।

प्लावेरोम्बालपव्वालौ ।४१। ण्यन्तस्य । ओम्बालइ । पव्वालइ । पावेइ ।

विकोशे पक्खोड ।४२। ण्यन्तस्य । पक्खोडइ । विकोसइ ।

रोमन्थेरोग्गालवग्गोलौ ।४३। नामधातोर्ण्यन्तस्य । ओग्गालइ । वग्गोलइ । रोमन्थइ ।

दोलेरङ्खोलः ।४८। स्वार्थे ण्यन्तस्य । रङ्खोलइ । दोलइ ।

वेष्टे परिआल ।५१। ण्यन्तस्य । परिआलेइ । वेढेइ ।

क्रियः किणो वेस्तु क्के च ।५२। किणइ । विक्कइ । विक्किणइ ।

भियो भा-वीहौ ।५३। भाइ । भाइअ । वीहइ । वीहिअ । बहुलाधिकाराद् । भीओ ।

आलीङोऽल्ली ।५४। अल्लियइ । ( अल्लीअइ ) । अल्लीणो ।

निलीङेर्णिलीअणिलुक्कणिरिग्घलुक्कलिक्कल्हिक्का ।५५। णिलीअइ । णिलुक्कइ । णिरिग्घइ । लुक्कइ । लिक्कइ । ल्हिक्कइ । निलिज्जइ । ( णिलिज्जइ ) ।

विलीङेर्विरा ।५६। विराइ । विलिज्जइ ।

रुतेरुञ्ज-रुण्टौ ।५७। रौते —रुञ्जइ । रुण्टइ । रवइ ।

श्रृणोर्हणः ।५८। हणइ । सुणइ ।

धूञेर्धुवः ।५९। धुवइ । धुणइ ।

काणेक्षिते णिआरः ।६६। काणेक्षितविषयस्य कृञो णिआर इत्यादेशो वा भवति । णिआरइ । काणेक्षित करोति ।

कृञः कुणः ।६७। कुणइ । करइ ।

श्रमे वावम्फः ।६८। वावम्फइ । श्रमं करोति ।

मन्युनौष्ठमालिन्ये णिव्वोलः ।६९। णिव्वोलइ । मन्युना ओष्ठं मलिनं करोति ।

शैथिल्यलम्बने पयल्लः ।७०। पयल्लइ । शिथिलीभवति, लम्बते वा ।

क्षुरेः कम्मः ।७२। कम्मइ । क्षुरं करोतीत्यर्थः ।

चाटौ गुललः ।७३। गुललइ । चाटु करोतीत्यर्थः । निष्पतनविषयस्य तु णोलुञ्छइ ।

आदेशा विहिताः, ते क्त्वा-तुमुन्-तव्येष्वपि बोध्या । यथा-ठाऊण=स्थित्वा । झाऊण=ध्यात्वा। गाऊण = गात्वा। ठाउ = स्थातुम्। झाउ = ध्यातुम्। गाउ = गातुम्। ठाअव्वं=स्थातव्यम् । झाअव्वं = ध्यातव्यम् । गाअव्वं = गातव्यम् । क्तप्रत्ययादन्यत्रैव एते आदेशाः । एवम्-बहुलग्रहणात्संस्कृतेऽपि कल्प्यते । हिनस्तीति हिंसः । वर्णविपर्ययात् सिंहः इति । पृषत् उदरं यस्येति । बाहुलकात् दकारलोपे गुणे पृषोदरः । एवं यत् किमपि सूत्रात् प्रतिपाद्यम्, तत्सर्वं बहुलग्रहणादवसेयम् ॥

इति श्रीमहामहोपाध्याय प० मथुराप्रसादकृते चन्द्रिकाख्यव्याख्याने धातुविधिरष्टम परिच्छेद ।

---

स्मरेर्झरझूरभरभललढविम्हरसुमरपयरपम्हुहा ।७४। झरइ । झूरइ । भरइ । भलइ । लढइ । विम्हरइ । सुमरइ । पयरइ । पम्हुहइ । सरइ । विपूर्वकस्य तु-पम्हुसइ । विम्हरइ । वीसरइ ।

व्यपहृग्मः कोक्कपोक्कौ ।७६। कोक्कइ । ह्रस्वत्वे तु-कुक्कइ । पोक्कइ । पक्षे-वाहरइ ।

प्रसरे पयल्लोवेल्लौ ।७७। पयल्लइ । उवेल्लइ । पसरइ । गन्धविषये तु-महमहइ मालई । मालईगन्धो पसरइ ।

जाग्रेर्जग्ग ।८०। जग्गइ । पक्षे-जागरइ ।

व्याप्रेराअड्ड ।८१। आअड्डइ । वावरेइ ।

आवृञ्‌ सन्नामः ।८३। सन्नामइ । आदरइ । अवतरतेस्तु—ओहइ । ओरसइ । ओअरइ ।

पचेः सोल्लपउल्लौ ।९०। सोल्लइ । पउल्लइ । पयइ ।

मुचेश्च ।९१। छड्डइ । अवहेडइ । मेल्लइ । उस्सिक्कइ । रेअवइ । णिलुञ्छइ । धसाडइ । पक्षे-मुअइ ।

दुःखेर्णिव्वलः ९२। णिव्वलेइ । दुःखं मुञ्चतीत्यर्थः । वञ्चेस्तु-वेहवइ । वेलवइ । जूरवइ । उमच्छइ । वञ्चइ । सिचेश्च-सिञ्चइ । सिम्पइ । सेअइ ।

गर्जेर्बुक्क ।९८। बुक्कइ । गज्जइ ।

वृषेढिक्क ।९९। ढिक्कइ । वृषभो गर्जतीत्यर्थ ।

राजेरग्घ-छज्ज-सह-रीर-रेहा ।१००। अग्घइ—इत्यादि ।

मस्जेराउड्ड-णिउड्ड-बुड्ड-खुप्पा ।१०१। आउड्डइ—इत्यादि । पक्षे-मज्जइ ।

पुञ्जेरारोलवमालौ ।१०२। आरोलइ—इत्यादि ।

तिजेरोसुक्कः ।१०४। ओसुक्कइ ।

मृजेरुग्घुस-लुञ्छ-पुञ्छ-पुस-फुस-पुस-लुह-हुल-रोसाणा ।१०५। उग्घुसइ—इत्यादि । पक्षे-मज्जइ ।

भञ्जेर्वेमय-मसुमूर-मूर-सूर-सूड-विर-पविरञ्ज-करञ्ज-नीरञ्जाः ।१०६। वेमयइ-इत्यादि । पक्षे-भञ्जइ । अनुव्रजेस्तु-पडिअग्गइ । अणुवच्चइ ।

युजो जुञ्ज-जुज्ज-जुप्पा ।१०९। जुञ्जइ । इत्यादि ।

भुजो भुञ्ज-जिम-जेम-कम्माण्ह-समाण-चमढ-चड्डाः ।११०। भुञ्जइ—इत्यादि । उपेन युक्तस्य तु-कम्मवइ । उवहुञ्जइ । घटेः-गढइ । घडइ । सम्पूर्वस्य तु-सङ्गलइ । सङ्घडइ ।

अचादेशा इति। अच्-प्रत्याहार से 'अ इ उ, ऋ लृ, ए ओ, ऐ औ, इत्यादि' सूत्रघटक पाणिनीयसूत्रप्रतिपादित का ग्रहण करना। और आदेश जैसे—'भुवो हो-हुवी', भू धातु हो-हुव आदेश, एवं भी धातु को 'भियो भा-बीहौ' से भा-बीह आदेश कहे गये हैं, वे बहुलग्रहण से अनेक प्रकार के होते हैं। अर्थात् अनेक धातुओं में अनेक प्रकार के अचादिकों के आगम और आदेश होते हैं। कविप्रयोगानुकूल एवं व्यवहारानुकूल कल्पना कर लें। बहुलपद के स्वरूप को कहते हैं—क्वचिदिति। कहीं पर सूत्र की प्रवृत्ति होती है। सूत्र से अप्राप्त भी आगम-आदेश हो जाते हैं। और कहीं पर

---

हासेन स्फुटेर्मुरः । ११४। मुरइ । हासेन स्फुरतीत्यर्थः ।

तुडेस्तोड-तुट्ट-खुट्ट-खुड-उक्खुड-उल्लुक्क-णिलुक्क-लुक्क-उल्लूराः ।११६। तोडइ-इत्यादि । पक्षे-तुडइ ।

घूर्णो घुल-घोल-घुम्म-पहल्लाः ।११७। घुलइ-इत्यादि । ग्रन्थे -गण्ठइ । गण्ठी ।

मन्थेर्घुसल-विरोलौ ।१२१। घुसलइ । पक्षे-मन्थइ । ह्लादे.-अवअच्छइ । ह्लादते, ह्लादयति वा । खिद्यते -जूरइ । विसूरइ । खिज्जइ ।

ने सदो मज्जः । १२३। निपूर्वस्य सदो मज्ज इत्यादेशो भवति । अत्ता एत्थ-णिमज्जइ । हे० ।

छिदेर्दुहाव-णिच्छल्ल-णिज्झोड-णिव्वर-णिल्लूर-लूराः ।१२४। दुहावइ—इत्यादि । पक्षे-छिन्दइ । आङ्पूर्वस्य तु-ओअन्दइ । उद्दालइ ।

मृदो मल-मढ-परिहट्ट-खड्ड-चड्ड-मड्ड-पन्नाडाः । १२६ । मलइ—इत्यादि । स्पन्देः-चुलुचुलइ । पन्दइ । विसंवदे -विअट्टइ । विलोट्टइ । फंसइ । विसंवयइ । शीयते -झडइ । पक्खोडइ । आक्रन्दे:-णीअहरइ । अक्कन्दइ ।

रुषेरुत्थङ्घ । १३३ । उत्थङ्घइ । रुन्धइ । निषेधते:-हक्कइ । निसेहइ । तनेः-तडइ । तड्डइ । तड्डवइ । विरल्लइ । तणइ । उपसर्पे -अल्लिअइ । उपसप्पइ ।

सन्तपेर्झङ्ख । १४० । झङ्खइ । पक्षे-सन्तप्पइ । ओअग्गइ । वावेइ । व्याप्नोतीत्यर्थः ।

क्षिपेर्गलत्थ-अड्डक्ख-सोल्ल-पेल्ल-णोल्ल-छुह-हुल-परी-घत्ताः । १४३ । गलत्थइ । परीइ-इत्यादि । पक्षे-खिवइ ।

उत्क्षिपेर्गुलगुञ्छ-उत्थङ्घ-अल्लत्थ-उब्भुत्त-उस्सिक्क-हक्खुवाः । १४४। गुलगुञ्छइ-इत्यादि । आक्षिपेस्तु-णीरवइ । अक्खिवइ ।

स्वपेः कमवस-लिस-लोट्टाः । १४६ । कमवसइ-इत्यादि। पक्षे-सुअइ । वेपेः—आयम्बइ । आयज्झइ । वेवइ ।

विलपेर्झङ्ख-वडवडौ । १४८ । झङ्खइ—इत्यादि । पक्षे-विलवइ । कृपेः-अवहावेइ । कृपां करोतीत्यर्थः ।

प्रदीपेस्तेअव-सन्दुम-सन्धुक्क-अब्भुत्ताः । १५२ । तेअवइ-इत्यादि । पक्षे-पलीवइ । क्षुभे:-सम्भावइ । लुब्भइ । क्षुभे:-खउरइ । पड्डुहइ । खुब्भइ ।

उपालम्भेर्झङ्ख-पच्चार-वेलवाः । १५६ । पक्षे-उवालम्भइ ।

अवेर्जृम्भो जम्भा १५७। जृम्भेर्जम्भा इत्यादेशो भवति, वेस्तु न भवति । जम्भाइ । जम्भाअइ । अवेरिति किम् ? केलिपसरो विअम्भइ । नमेः-णिसुढइ । भाराक्रान्तो नमतीत्यर्थः । मण्डे -चिञ्चइ । चिञ्चिअइ । चिञ्चिल्लइ । रीडइ । टिविडिक्कइ । मण्डइ । विश्राम्यते:-णिव्वाइ । वीसमइ । आक्रमते:-ओहावइ । उत्थारइ । छुन्दइ । अक्कमइ ।

भ्रमेष्टिरिटिल्ल-ढुण्ढुल्ल-ढण्ढल्ल-चक्कम्म-भम्मड-भमड-भमाड-तलअण्ट-झण्ट-झम्प-भुम-

सूत्र से सर्वथा प्राप्त हैं परंतु नहीं होंगे अर्थात् तत्प्रयुक्त वर्णागमादिक और आदेश नहीं होंगे। और कहीं विकल्प से और कहीं कुछ और ही हो जायगा, जो सूत्र से कथमपि प्राप्त नहीं है। इस प्रकार कार्य के आगमादि आदेशों को बहुधा भिन्न भिन्न प्रकार से समीक्षा करके अर्थात् आवापोद्वाप से निर्णय करके चार प्रकार का बहुल-स्वरूप कहते हैं। प्रथम-अडागम के उदाहरण देते हैं। जैसे धाव् धातु को 'शेषाणा मदन्तता' से अकारान्तता। फिर बहुलपद से अट्-प्रत्याहारान्तर्गत ओकार। एवम्-आकार को ओकार हो गया। धोवइ। लोकव्यवहारानुकूल गति में धावइ रहेगा।

---

भुम-गुम-फुम-फुम-ढुम-ढुस-परीपरा ।१६१। भ्रमेरेतेऽष्टादशादेशा वा भवन्ति। टिरिटिल्लइ-इत्यादि। पक्षे-भमइ।

गमेरई-अइच्छ-अणुवज्ज-अवज्जस उक्कुस-अक्कुस-पच्चड्ड-पच्छन्द णिम्मह-णी-णीण णीलुक्क-पदअ-रम्भ-परिअल्ल-वोल-परिअल-णिरिणास-णिवह-अवसेह-अवहरा ।१६२। गमेरेते एकविंशतिरादेशा वा भवन्ति। अईइ। णीइ-इत्यादि। पक्षे-गच्छइ। हम्मइ। णिहम्मइ। णीहम्मइ। आहम्मइ। पहम्मइ। इत्येते तु हम्म गतावित्यस्यैव भविष्यन्ति। ६०। आङ्पूर्वकस्य गमे -अहिपच्चुअइ। सयुक्तस्य-अभिमड्डइ। अभ्याङ्पूर्वस्य-उम्मत्थइ। अभिमुखमागच्छतीत्यर्थः। प्रत्याङ्पूर्वस्य-पलोट्टइ। प्रत्यागच्छतीत्यर्थ। शमे -पडिसाइ। पडिसामइ। समइ।

रमे सखुड्ड-खेड्ड-उब्भाव-किलिकिञ्च-कोट्टुम-मोट्टाय-णीसर-वेल्ला. ।१६८। सखुड्डइ-इत्यादि। पक्षे-रमइ।

पूरे-रग्घाड-अग्घव-उद्धुम-अङ्गुम-अहिरेमा. ।१६९। अग्घाडइ—इत्यादि। पक्षे-पूरइ। पूरयनीत्यर्थ। त्वरते -जअडइ—इत्यधिक।

क्षर खिर-झर-पज्झर-पच्चड-णिच्चल-णिट्टुआ ।१७३। खिरइ-इत्यादि। उच्छ्वलते -उत्थल्लइ। विगले -थिप्पइ। दले -विसट्टइ। वले -वम्फइ। पक्षे-विगलइ। दलइ। वलइ।

भ्रशे फिड-फिट्ट-फुड-फुट्ट-चुक्क-भुल्ला ।१७७। फिडइ-इत्यादि। पक्षे-भसइ।

नशेर्णिरनास-णिवह-अवरोह-पडिसा-सेहावहरा ।१७८। पक्षे-नस्सइ। सदिशन-अप्पाहइ। सदिसइ। अवात्काशे -ओवासइ।

दृशो निअच्छ-पेच्छ-अवयच्छ-अवयज्झ-वज्ज सब्बव-देक्ख-ओअक्ख-अवक्ख अवअक्खइ पुलोअ(पुलोए)निअ-अवपु-आस पासा ।१८१। निअच्छइ—इत्यादि। निज्झाअइ-इति तु निध्यायते।

स्पृश फास-फस फरिस-छिव-छिह-आलुङ्ख-आलिहा ।१८२। फासइ—इत्यादि। प्रविशे -रिअइ। पविसइ। प्रमृशते प्रमुष्णातेश्च-पम्हुसइ।

पिषेर्णिवह-णिरिणास-णिरिणज्ज-रोञ्च-चड्डा ।१८५। णिवहइ—इत्यादि। पक्षे-पीसइ। भषे -भुक्कइ। भसइ।

कृषे कड्ढ-साअड्ढ-अञ्च-अणच्छ-अयञ्छ-आइञ्छा. ।१८७। कड्ढइ-इत्यादि। पक्षे-करिसइ। असिविषयस्य तु-अक्खोडइ ( अक्खोडइ ) असिं कोशात्कर्षतीत्यर्थः।

गवेषेर्ढुण्ढुल्ल-ढण्ढोल-गमेस-घत्ता' ।१८९। ढुण्ढुलइ-इत्यादि। पक्षे-गवेसइ। श्लिष्यते'-सामग्गइ। अवयासइ। परिअन्तइ। सिलेसइ। म्रक्षे -चोप्पडइ। मक्खइ।

काङ्क्षेराह-अहिलङ्घ-अहिलङ्ख-वच्च-वम्फ-मह-सिह-विलुम्पा (विलुम्फा) ।१९२। आहइ-इत्यादि। पक्षे-कङ्खइ।

मारवाड़ में बोबो-बोबो रुदन अर्थ में बाब-बाब कहते हैं। एवम्-स्वप् धातु को उल्लिखित सूत्रों से सवइ सिद्ध हो जाने पर बहुलपद से अकार को ओकार और उकार होगा। अतः सोवइ एवं सुवइ ये दो रूप होंगे। इण् धातु के इकार को एकार होगा। एइ, एति। दा धातु के आकार को एकार होगा। देइ, ददाति। नी धातु के ईकार को एकार होगा। नेइ, नयति। रुद् धातु अश्रुविमोचन अर्थात् रोने के अर्थ में है। उल्लिखित सूत्रों से रुवइ सिद्ध हो जाने पर बहुलपद से रुगत उकार को ओकार होगा। रोवइ, रोदिति। णश् धातु अदर्शन = नाश होना अर्थ में है। निर्दिष्ट सूत्रों से नसइ सिद्ध हो जाने पर बहुलपद से अकार को आकार होगा। नासइ, नश्यति। इसी प्रकार अन्यत्र भी आगमों की कल्पना कर लेना। बहुलग्रहण से अन्य अकारादिक आगमों की विधि कही। अर्थात् कहाँ पर क्या आगम होता है-इत्यादि उदाहरण दिये।

---

प्रतीक्षे॰ सामय-विहीर-विरमालाः ।१९३। सामयइ-इत्यादि । पक्षे-पडिक्खइ ।

क्षेस्तच्छ-चच्छ-रम्फा ।१९४। तच्छइ-इत्यादि । पक्षे-तक्खइ । बिकसे -कोआसइ । वोसट्टइ । विअसइ । हसे॰-गुञ्जइ । हसइ । स्रंसेः-ल्हसइ । परिल्हसइ सलिलवसण । डिम्भइ । ससइ ।

त्रसेर्डर-वोज्ज-वज्जा ।१९८। डरइ-इत्यादि । पक्षे-तसइ ।

न्यसो णिम-णुमौ ।१९९। णिमइ । णुमइ । पर्यसस्तु-पलोट्टइ । पल्लट्टइ । पल्हत्थइ । निश्वसे -झङ्खइ । नीससइ ।

उल्लसेरूसल-ऊसुम्भ-णिल्लस-पुलआअ-गुञ्जोल्ल-आरोआ॰ ।२०२। ऊसलइ । गुञ्जोल्लइ । ह्रस्वत्वे-गुञ्जुल्लइ इत्यादि । पक्षे-उल्लसइ । भासे -भसइ । भासइ । ग्रसेश्च-घिसइ । गसइ । ओवाहइ । ओगाहइ । अवगाहत इत्यर्थः । आरोहतेः-चडइ । वलग्गइ । आरुहइ ।

मुहेर्गुम्म-गुम्मडौ ।२०७। पक्षे-मुज्झइ ।

दहेरहिऊल-आलुङ्खौ ।२०८। पक्षे-डहइ ।

ग्रहो वल-गेण्ह-हर-पङ्ग-निरुवार-अहिपच्चुआः ।२०९। वलइ । गेण्हइ, गिण्हइ-इत्यादि ।

वचो वोत् ।२११। क्त्वातुमुन्तव्येषु । वोत्तूण । वोत्तुं । वोत्तव्वं ।

दृशस्तेन ट्ठ॰ ।२१३। दृशोऽन्त्यस्य तकारेण सह द्विरुक्तष्ठकारो भवति । दट्ठूण । दट्ठुं । दट्ठव्वं ।

आ कृगो(१) भूत-भविष्यतोश्च ।२१४। काहीअ । काहिइ । काऊण । काउं । काअव्वं ।

छिदिभिदोर्न्द॰ ।२१६। छिन्दइ । भिन्दइ ।

युध-बुध-गृध-क्रुध-सिध-मुहां ज्झ ।२१७। जुज्झइ । बुज्झइ । गिज्झइ । कुज्झइ । सिज्झइ । मुज्झइ ।

समो ल्लः ।२२२। सम्पूर्वस्य वेष्टतेरन्त्यस्य द्विरुक्तो लो भवति । संवेल्लइ ।

वोदः ।२२३। उदः परस्य तु वा भवति । उव्वेल्लइ । उव्वेढइ ।

उवर्णस्यावः ।२३३। धातोरन्त्यस्योवर्णस्य अवादेशो वा भवति । ह्नुङ्-निण्हवइ । हु-निहवइ । च्युङ्-चवइ । रु-रवइ । कु-कवइ । सू-सवइ । पसवइ ।

स्वराणां स्वराः ।२३८। धातुषु स्वराणां स्थाने स्वरा बहुलं भवन्ति । हवइ । हिवइ ।

---

१. कृञः संग्रहम् ।

अब आदेशविधि कहते हैं। जैसे—स्मृ धातु को भिल्म अर झुमर आदेश कहे हैं। ये बहुलग्रहण से विकल्प से होंगे। अतः पक्ष में-'अधो मनयाम्' से मकारलोप। 'अन्ते अरः' से अर। सरइ। स्मरति। मस्जधातु को बुड्ड खुड्ड आदेश होते हैं, वे भी बहुलपद से विकल्प से होंगे। पक्ष में-'उपरि लोपः कगड०' से सलोप। 'शेषादेशयोर्द्वित्वमनादौ' से द्वित्व। 'शेषाणामदन्तता' से अकारान्तता। 'लादेशे वा' से एत्व। मज्जइ, मज्जेइ। बहुलग्रहण से तक्ष धातु को रंप वच्छ विकल्प से होंगे। पक्ष में-'ष्कस्कक्षां खः' से ख, 'शेषादेशयोः' से द्वित्व। 'वर्गे( षु ) युजः पूर्वः' से ककार। अन्य कार्य पूर्ववत्। तक्खइ। तक्ष्णोति। तथा शक धातु—'शषोः सः'। 'शेषाणामदन्तता'। 'शकादीनां द्वित्वम्'। सक्कइ। क्षि का विकल्प से पूर्ववत् क्ष को ख। 'अलन्तानामद् वा' से अकार। खिअइ। क्षयति। कहीं अन्य ही कार्य हो जाते हैं।

---

चिणइ। चुणइ। सद्दहण। सद्दहाण। धावइ। धुवइ। रुवइ। रोवइ। क्वचिन्नित्यम्-देइ। लेइ। विहेइ। नासइ। आर्षे-वेमि।

व्यञ्जनाददन्ते।२३९। व्यञ्जनान्ताद्धातोरन्ते अकारो भवति। ममइ। हसइ। कुणइ। चुम्बइ। भणइ। उवसमइ। पावइ। सिञ्चइ। रुन्धइ। मुसइ। हरइ। करइ। शवादीनां प्राय प्रयोगो नास्ति।

स्वरादनतो वा।२४०। अकारान्तवर्जितात्स्वरान्ताद्धातोरन्ते अकारागमो वा भवति। पाइ। पाअइ। धाइ। धाअइ। जाइ। जाअइ। झाइ। झाअइ। जम्माइ। जम्भाअइ। उव्वाइ। उव्वाअइ। मिलाइ। मिलाअइ। विक्केइ। विक्कअइ। होऊण। होअऊण (होइऊण)। अनत इति किम्। चिइच्छइ। दुगुच्छइ। जानाते कर्मभावे-णव्वइ। णज्जइ। पक्षे-जाणिज्जइ, मुणिज्जइ। णाइज्जइ। नञ्-पूर्वकस्य-अणाइज्जइ। व्याहृञः कर्मभावे-वहिप्पइ। वाहरिज्जइ। आरभेः कर्मणि-आढप्पइ, आढवीअइ। स्निह-सिचोः कर्मणि-सिप्पइ। ग्रहेः कर्मणि-घेप्पइ। गिण्हिज्जइ। स्पृशेः कर्मणि-छिप्पइ। छिविज्जइ। जीहइ। लज्जइ। लज्जन इत्यर्थः। विरेचयते—ओलुण्डइ। उल्लुण्णइ। पल्हत्थइ। विरेअइ। ताडयते—आहोडइ। विहोडइ। पक्षे-ताडेइ। उद्धूलयते—गुण्ठइ। उद्धूलेइ। नाशयते—विउडइ। नासवइ। हारवइ। विप्पगालइ। पलावइ। नासइ। उत्पूर्वस्य घटेर्ण्यन्तस्य—उग्गइ। उग्घाडइ। सम्भावयतेः—आसङ्घइ। सम्भावइ। उत्थङ्घइ। उल्लालइ। गुलगुञ्छइ। उप्पेलइ। उन्नावइ। उत्पूर्वस्य नमेर्ण्यन्तस्यैते प्रयोगाः। पट्ठवइ। पेण्डवइ। पट्ठावइ। प्रस्थापयतीत्यर्थः। अर्पयतेः—अल्लिवइ। चच्चुप्पइ। पणामइ। अप्पेइ। कमे प्रयोगौ—णिहुवइ, कामेइ-इति। प्रकाशयते—णुव्वइ। पयासअइ। विच्छोलइ। कम्पेइ। कम्पयतीत्यर्थः। आरुहेर्ण्यन्तस्य—वलइ। आरोवेइ। रञ्जेर्ण्यन्तस्य—रावेइ। रञ्जेइ। घटयते—परिवाडेइ। घडेइ। रचयतेः—उग्गहइ। अवहइ। विडविड्डइ। रयइ। सम्पूर्वस्य तस्य—उवहत्थइ। सारवइ। समारइ। केलायइ। समारयइ।

अक्कुण्णादय शब्दाः क्तेन सह निपात्यन्ते। तद्यथा—

अक्कुण्णो-आक्रान्तः। उक्कोस-उत्कृष्टम्। फुड-स्पष्टम्। वोलीणो-अतिक्रान्तः। लुग्गो-रुग्ण। विढत्त-वेढत्त, अर्जितम्। निमिअ-स्थापितम्। चक्खिअ-आस्वादितम्। हीसमण-हेषितम्—इत्यादि।

धातवोऽर्थान्तरेऽपि।२४१। उक्तादर्थादर्थान्तरेऽपि धातवो वर्तन्ते। बलि: प्राणने पठितः खादनेऽपि वर्तते। बलइ। खादति, प्राणनं करोति वा। एवम्-कलिः संख्यानेऽपि। कलइ।

जैसे–भविष्यदादिक अर्थों में एकवचन के परे ठा–झा–गा आदेश कहे हैं, वे अन्यत्र क्त्वा–तुमुन्–तव्य प्रत्ययों के परे भी होंगे। ठाऊण=स्थित्वा। झाऊण=ध्यात्वा। गाऊण=गात्वा। सर्वत्र 'क्त्वा तूण' से तूण 'कगचज' से तलोप। एवं–ठाउ। झाउ। गाउ। 'कगचज॰' से तलोप। 'अधो मनयाम्' से यलोप। 'शेषादेशयोः' से द्वित्व। 'मो बिन्दुः'। ठाअव्वं। झाअव्वं। गाअव्वं। इसीप्रकार संस्कृत में भी बहुल-ग्रहण से वर्णविपर्ययादिक होते हैं। जैसे–हिसि हिंसायाम्। हिनस्ति इति हिंसः प्राप्त था, हकार–सकार का विपर्यय करने से सिंहः होगा। पृषत् उदर यहाँ सूत्र से तलोप अप्राप्त था, बहुलग्रहण से लोप। इसी को 'पृषोदरादीनि यथोपदिष्टानि' कहा है। इस तरह सूत्र से प्रतिपाद्य जो कुछ भी है, बहुलग्रहण से प्रयोगानुकूल उस आगमादेश की कल्पना कर लेना।

इति श्रीमहामहोपाध्याय-मथुराप्रसादकृतायां प्राकृतप्रकाशव्याख्यायां हिन्दी-सरलाव्याख्यायां धातुविधिरष्टमः समाप्तः।

---

जानाति, सख्यान करोति वा। रिगिर्गतौ, प्रवेशेऽपि। रिगइ (रिग्गइ, रिंगइ)। प्रविशति, गच्छति वा। काङ्क्षतेर्बम्फ आदेशः प्राकृते–बम्फइ। अस्यार्थः–इच्छति, (पृच्छति) खादति वा। फक्कतेस्थक्क आदेशः। थक्कइ। नीचां गतिं करोति, विलम्बयति वा। विलप्युपालम्भ्योर्झङ्ख आदेशः। झङ्खइ। विलपति, उपालभते, भाषते वा। दृश–पडिवालेइ। प्रतीक्षते, रक्षति वा। केचित् कैश्चिदुपसर्गैर्नित्यम्। हरइ। शुष्यते। संहरइ। संवृणोति। अणुहरइ। सदृशीभवति। नीहरइ। पुरीषोत्सर्गं करोति। विहरइ। क्रीडति। आहारइ। खादति। पडिहरइ। पुनः पूरयति। परिहरइ। त्यजति। उवहरइ। पूजयति। वाहरइ। आह्वयति। पवसइ। देशान्तरं गच्छति। उच्चुपइ। चटति।। उल्लुहइ। निःसरति। इति (१)। प्रायोऽत्र हेमानुसार्यादेशानामुल्लेखः।

---

१. अत्र सूत्रसङ्ख्या हेमचन्द्राभिधस्य शब्दानुशासनस्य परिशिष्टरूपस्याऽष्टमाध्यायस्य चतुर्थपादान्तर्गताऽवगन्तव्या।

# अथ नवमः परिच्छेदः

## निपाताः ॥ १ ॥

**अधिकारोऽयम्। वक्ष्यमाणा निपातसंज्ञका वेदितव्याः। संस्कृतानुसारेण निपातकार्यं वक्तव्यम् ॥ १ ॥**

निपाता —अधिक्रियन्ते, अत ये शब्दा वक्ष्यन्ते ते निपात-संज्ञका भवन्तु। ते च अव्ययनामानोऽपि भवन्ति। आ परिच्छेदसमाप्तेरयमधिकारो वेदितव्य।

सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

इति प्रातिपदिकेभ्योऽस्य विशेष ॥ १ ॥

**अब इस परिच्छेद में निपातविधि कहते हैं—**

**निपाता इति। यह अधिकार सूत्र है। इसके अनन्तर सब शब्द निपातसंज्ञक होंगे और वे अव्यय-नाम-वाले होंगे अर्थात् उन्हें अव्यय भी कहेंगे। निपाताधिकार परिच्छेद की समाप्ति तक जानना। अब प्रथम अव्यय का स्वरूप बताते हैं। पुल्लिङ्ग, स्त्रीलिङ्ग, नपुंसकलिङ्ग इन तीनों लिङ्गों में, प्रथमा-द्वितीया आदि सातों विभक्तियों में और एकवचनादि सब वचनों में जो सदृश हो समानरूप से रहे, व्यय किसी प्रकार के नाश को न प्राप्त हो वह अव्यय कहाता है। यही प्रतिपदिक से अव्यय का विशेष है। प्रातिपदिक में लिङ्ग-वचन से भेद रहता है ॥ १ ॥**

## ( कीस किमर्थे। )

कीस किमर्थे[1]—किम्शब्दस्य योऽर्थ तत्र कीस इति निपात प्रयुज्यते। कीस तए मह कहिअ। किं त्वया मम कथितम्। अत्र किमर्थे कीम इति ॥

**कीसेति। किमर्थ में कीस इस निपात का प्रयोग होता है। 'कीस तए मह कहिअ'। क्या तुमने मुझ से कहा। यहाँ किम्शब्द के अर्थ में कीस यह है ॥**

## हुं दानपृच्छानिर्धारणेषु ॥ २ ॥

**हुं-इत्ययं शब्दो दानपृच्छानिर्धारणेष्वर्थेषु निपातसंज्ञो भवति। दाने यथा-हु गेण्ह अप्पणो जीअं ( गेण्ह ८-१५ सू० स्प०, अप्पणो ५-५५ सू० स्प०, जीअं २-२ ; ४-५ सू० स्प०, शे० सुगमम् )। पृच्छायाम्-हु कधेहि साहुसु सब्भावं ( कधेहि इति १२-३ शौरसेन्यां, थ = ध, ७ १८ विध्यादावेकत्वे सिप् = सुकृते[2] ७-३४ लादेशे सति, एत्वम्, मध्यमे २-२७ धू = ह्, २-४३ ष् = स्। अन्त्ये ३-२ दलोपः, ३-५० भद्वि०, ३-५१ भ् = ब्, प्राय इति २-२ बलोपो न, ५-३ अमोऽकारलोपः, ४-१२**

---

१ भामहवृत्ताविदं नोपलभ्यते सूत्रम्। २. 'सोर्हिर्वा' ८।३।१७४ हेम० सू०-सोर्हिः।

मर्वि० )। निर्धारणे-हुं हुवसु तुण्हिक्को ( ८-१ भू=हुव, ७-१८ लिप्=सु, अन्त्यः ३-५८ सू० द्रष्टव्यः )। हुं गृहाणात्मनो जीवम्। हुं कथय साधुसु सद्भावम्। हुं भव तूष्णीकः ॥ २ ॥

हुं दानपृच्छानिवारणेषु[1]—दाने, पृच्छायां, निवारणे च हुं-इति निपातः प्रयुज्यते। हु देअर! गेण्हसु। हुं देवर! गृहाण। अत्र हुं-शब्दो दानार्थं द्योतयति। हुं भण। अत्र हुं-शब्दः पृच्छा द्योतयति। हु होसु तुण्हिओ। हुं भव तूष्णीकः। अत्र हुं-शब्दः प्रतिषेधार्थं द्योतयति। निपाताः क्वचिद् वाचकाः, क्वचिद् द्योतकाश्चेति यथादर्शनमवगन्तव्यम् ॥ २ ॥

हुं-इति। दान-देना, पृच्छा-पूछना, निवारण-रोकना,—इन अर्थों के द्योत्य रहते अर्थात् कथंचित् प्रतीयमान रहते हुं इस निपात का प्रयोग होता है। 'हुं देवर! गेण्हसु'। हाँ, देवर ग्रहण कीजिये। जो मैं दे रही हूं, उसे लीजिये। यहाँ दानप्रतीत्यर्थ हुंशब्द है। हुं भण। हां कहिये। क्या पूछते हो। यहां पृच्छा अर्थ में हुशब्द है। 'हु होसु तुह्णीओ'। हां चुप हो जाइये। अर्थात् अब आगे कुछ मत कहिये। यहाँ कथन निवारण अर्थ में हुंशब्द है। निपात कहीं पर वाचक और कहीं पर द्योतक प्रतीत होते है। वस्तुतः किसी आचार्य के मत से वाचक हैं और किसी के मत से द्योतक हैं। विहार, आहार, संहार, परिहार-एक ही हृधातु में उपसर्गभेद से अनेक अर्थों की प्रतीति है। एवम्-प्रभवति, पराभवति, संभवति, अनुभवति, उद्भवति-इत्यादि ॥ २ ॥

## विअ-वेअ अवधारणे[2] ॥ ३ ॥

विअ, वेअ इत्येताववधारणे निपातसंज्ञौ भवतः। एवं विअ। एवं वेअ। ( एवं संस्कृतसमः, शे० स्प० )। एवमेव ॥ ३ ॥

विअ वेअ[3] अवधारणे—निश्चयार्थे विअ, वेअ इत्येतौ वर्तेते। एसो विअ सो राआ। एष एव स राजा-इति निश्चय। स वेअ इय णअरी। सैवेय नगरी। अन्या न भवतीति निश्चय। स विअ, स च्चेअ। सैव ॥ ३ ॥

विअ-इति। विअ, वेअ ये निपात निश्चय अर्थ में प्रयुक्त होते हैं। एसो विअ सो राआ। यह वही राजा है। यहाँ निश्चयार्थक विअ-शब्द है। सवेअ इअं णअरी। यह वही नगरी है अर्थात् दूसरी नहीं है-यह निश्चय है। इस प्रकार यहाँ निश्चयार्थक वेअ-शब्द है ॥ ३ ॥

## ओ सूचनापश्चात्तापविकल्पेषु ॥ ४ ॥

ओ-इत्ययं शब्दः सूचनापश्चात्तापविकल्पेषु निपातसंज्ञो भवति। ओ विरअसि ( २-२ यलोपः, ७-२ सि )। गाथासु द्रष्टव्यः ॥ ४ ॥

ओ सूचनापश्चात्तापविकल्पेषु—सूचना=साभिप्रायमुद्देशकथनम्। पश्चात्तापः=अनुशयः। विकल्पः=इदम्, इदं वेति पाक्षिको विधिः। एषु त्रिष्वर्थेषु ओ इति निपातो

---

१ एष पाठः सजीवनीसमतः। २ विअ चेअ चिअ। इ चिअ। तुमं चिअ। अहमेव—त्वमेव। का० पा०। ३. विअ-वेअ—इति भामहसंमतः पाठः।

वर्तते। ओ अविणअजत्तणिला। ओ अविनययत्नवती। अत्र ओ-शब्दः पूर्वकृतस्यकी- याकरणीयसूचकत्वं द्योतयति। ओ ण पसण्णम्हि। ओ=किमिति न प्रसन्नाहमभवम् इति पश्चात्ताप द्योतयति। ओ अणुणेमि। ओ अनुनयामि। अत्र विकल्पार्थ ओशब्दः ॥४॥

ओ–इति। सूचनादिक अर्थों में 'ओ' इस निपातसंज्ञक का प्रयोग होता है। सूचना–अभिप्रायपूर्वक किंचिन्मात्र वस्तु की सूचना। पश्चात्ताप–पछताना। विकल्प– यह अथवा यह—इस प्रकार पाक्षिक विधि विकल्प कहाता है। इन अर्थों में ओ यह निपात होता है। ओ अविणयजत्तणिला। अविनय में यत्नवती थी। यहाँ पूर्वकृत यत्न के अकरणीयत्व की सूचना है। ओ ण पसण्णम्हि। ओ मैं क्यों न प्रसन्न हो गयी। यहाँ प्रसन्न न होने के पश्चात्ताप को यह सूचित करता है। ओ अणुणेमि। अच्छा यदि नहीं मानता है तो मैं पैरों में पड़ूँगा=अनुनयविनय करूँगा। यहाँ विकल्पार्थक ओशब्द हैं ॥ ४ ॥

## इरकिरकिला अनिश्चिताख्याने ॥ ५ ॥

इर, किर, किल इत्येते शब्दा अनिश्चिताख्याने निपातसंज्ञका भव- न्ति। पेक्ख इर तेण हदो (आदिमः ६–५१ सू० द्रष्टव्यः। तेण ४–६ तदोऽन्त्यलोपः, ५–१२ एत्वं, ५–४ टा = ण[1]। अन्त्यः ४–६ हनोऽन्त्य- लोपः, १२–३ त = द, ५–१ ओ)। अज्ज किर तेण ववसिओ। (व्यव- सित इत्यत्र ३–२ यलोपः, प्राय इति २–२ वलोपो न, २–२ तलोपः, ५–१ ओ, शे० स्प०)। अअं किल सिविणओ (२–२ यलोपः, ४–१२ मबिं०, शे० स्प०। अन्त्यं १–३ सू० द्रष्टव्यम्)। प्रेक्षस्व किल तेन हतः। अद्य किल तेन व्यवसितः। अयं किल स्वप्नः ॥ ५ ॥

इर-किर-किला अनिश्चयाख्यानेषु[2]—इर-किर-किला शब्दा अनिश्चयस्य अस म्यगर्थस्य आख्याने प्रतिपादने प्रयुज्यन्ते। इह इर दिट्ठो दइओ। इह किल दृष्टो दयित। अत्र इरशब्द स्थानदर्शनादेव निश्चितार्थं वक्ति, इति असम्यगेव निश्चया- ख्यानम्। एत्थ किरालिंगिओ। अत्र किलालिङ्गितः। अत्र किरशब्द· स्थानस्यालिङ्ग- नस्य असम्यगर्थतां द्योतयति। ण किल रमिओ। न किल रमित·। अत्र किलशब्दः रमितार्थप्रतिषेधस्य अपरिस्फुटतां कथयति ॥ ५ ॥

इरेति। इर–किर–किल ये शब्द अनिश्चय असम्यग् अर्थ के प्रतिपादन में प्रयुक्त होते हैं। इह इर दिट्ठो दइओ। यहाँ पर प्रिय को देखा था। यहाँ पर किल (इर)–शब्द स्थानदर्शन से ही निश्चित अर्थ को कहता है, अतः शब्द के प्रयोग से असम्यक् प्रकार से निश्चय को कहता है। एत्थ किरालिंगिओ। यहाँ पर आलिङ्गन किया गया। यहाँ किरशब्द स्थानस्य आलिङ्गन के अपरिस्फुटार्थ को सूचित करता है। ण किल रमिओ। यहाँ किलशब्द रमणप्रतिषेध को अपरिस्फुट सूचित करता है। अर्थात्–रमणप्रतिषेध को स्फुटतया नहीं कहता है ॥ ५ ॥

---

१ तेनेत्यत्र २–४२ इति णत्वमात्रमिति केचित्। २. संजीवनीसंमतः पाठः।

## हुं क्खु निश्चयवितर्कसम्भावनेषु ॥ ६ ॥

हुं, क्खु इत्येतौ निश्चयवितर्कसम्भावनेषु निपातसंज्ञकौ भवतः । हुं रक्खसो ( हुं स्प०, ३-२९ क्ष = ख, ३-५० द्वित्वं०, ३-५१ ख = क् , ४-१ ह्रस्वः, ५-१ ओ ) । गुरुओ क्खु भारो ( ५-१ ओत्वम् , अन्यत्स्पष्टम् ) । हुं राक्षसः । गुरुः खलु भारः ॥ ६ ॥

हु-क्खु निश्चयवितर्कसंभावनासु[1]—निश्चयो = विश्वासः । वितर्कः = विमर्शः । संभावना = उत्कटैककोटिस्वरूपाशङ्कासभावना । कार्याध्यवसायस्वरूपेत्यर्थः, एष्वर्थेषु हु, क्खु एतौ निपातौ स्तः । अज्ज हु दीसइ दइआ । हु-निश्चयेन । अद्य दयिता दृश्यते । अत्र हुशब्दो निश्चयं बोधयति । एवमेव क्खुशब्दप्रयोगेऽपि । अज्ज क्खु एसा मं पलोएइ । अद्य खलु एषा मां प्रलोकयेत् । अत्र क्खुशब्दः निश्चयं द्योतयति । ण हु दिट्ठो तइ अज्जवि । न हु दृष्टस्त्वयाऽद्यापि । अत्र हुशब्दो वितर्कं द्योतयति । पेच्छ क्खु दारम्मि सो कदावि ठिओ होज्ज । प्रेक्षस्व खलु द्वारे स कदापि स्थितो भविष्यति । अत्र क्खुशब्दो द्वारदेशस्थितिविमर्शोत्पत्तिद्योतकः । एवं हुशब्दप्रयोगः । संभावनायाम्-अच्छ ताव हु णइए । आस्तां तावत् खलु नद्याः । अत्र हुशब्दो नदीपारगमनसंभावनां द्योतयति । खणा क्खु वच्चामि जलणिहिणो पारं । क्षणात् खलु व्रजामि जलनिधेः पारम् । अत्र क्खुशब्दः सागरपारतीरप्राप्त्यवसायद्योतनार्थः । एवं यथायथं हु-क्खु-शब्दौ निश्चयाद्यर्थं प्रकाशयतः ॥ ६ ॥

हु-इति । निश्चयादिक अर्थों में हु, क्खु ये निपात प्रयुक्त होते हैं । निश्चय—विश्वासात्मक स्थिरज्ञान । वितर्क—विमर्श । संभावना—उत्कटकोटिस्वरूपा शङ्का अर्थात् शङ्कास्पदकार्याध्यवसायस्वरूपज्ञान । अज्ज हु दीसइ दइआ । हु निश्चयेन अद्य दयिता दृश्यते । यहाँ हुशब्द निश्चय को द्योतित करता है । इसी प्रकार क्खु ( खलु ) शब्द के प्रयोग में भी जानना । अज्ज क्खु एसा मं पलोएइ । आज वह मुझे देखेगी । यहाँ निश्चय को खलुशब्द बोधित करता है । ण हु दिट्ठो तइ अज्ज वि । आज भी नहीं देख पड़ा । यहाँ हुशब्द वितर्क को प्रकाशित करता है । एवं क्खु शब्द के प्रयोग में—पेच्छ क्खु दारम्मि सो कदावि ठिओ होज्ज । देखो कदाचित् वह दरवाजे पर स्थित होगा । यहाँ क्खुशब्द द्वार पर ठहरने के विमर्श को बोधित करता है । संभावना में हु शब्द—अच्छ ताव हु णईए । संभवतः नदी के पार होगा । यहाँ हुशब्द नदी के पार जाने की संभावना को कहता है । क्खुशब्द—खणा क्खु वच्चामि जलणिहिणो पारं । क्षणमात्र में मैं समुद्र के पार जाता हूँ । यहाँ क्खुशब्द समुद्र के पार जाने के उद्योग-साहस से पार-प्राप्ति-सिद्धि संभावना को सूचित करता है । इसी तरह अन्यत्र भी हु—क्खुशब्द पूर्वोक्त निश्चयादिक अर्थों को यथास्थान प्रकाशित करते हैं ॥ ६ ॥

## णवरः केवले ॥ ७ ॥

---

१. अयं पाठः संजीविन्यादिसंमतः । नेदं सूत्रं संजीवन्यादौ ।

णवरः इत्ययं शब्दः केवलेऽर्थे निपातसंज्ञो भवति। णवर अण्णं (अन्यशब्दस्य २-४२ न्=ण, ४-१२ मबिं०[1]) ॥ ७ ॥

## ( इजेराः पादपूरणे । )

इजेरा[2] पादपूरणे[2]—इ-जे-र इत्येते निपाता पादपूरणे वर्तन्ते। न्यूनपादपूरणमेव एषां प्रयोजनम्। 'एस इ तदा पअट्ठो'। एष तथा प्रवृत्त'। अत्र इकार पादपूरणमात्रे वर्तते। न्यूनपादपूरणमेवैतेषां प्रयोजनम्। वृत्तभङ्गभयात् इकारस्तत्पूर्त्यै प्रयुक्तः। 'लभइ जे पेक्खेउ'। लभ्यते प्रेक्षितुम्। अत्र 'जे' इति पादपूरणमात्रे। यत्तु सदानन्देन वसन्तराजेन च 'पेखिउ' इति प्रयुक्तम्, तन्न समीचीनम्। तथासति एकमात्रा न्यूनैवावतिष्ठते। तस्मात्-'ए च क्त्वातुमुनतव्यभविष्यत्सु' इत्येकार। 'पेक्खेउ' इति युक्तः पाठ.। ण र तए वि (कहिओ सो)। न त्वयापि कथित स। अत्र रेफ. पादपूरणार्थः ॥

इजेरा इति। इ-जे-र ये निपात श्लोक की पादपूर्ति के लिये होते हैं। न्यूनपाद की पूर्ति ही इनका प्रयोजन होता है अर्थात् इनका अर्थ कुछ नहीं होता। 'एस इ तदा पअट्ठो'। यहाँ वृत्त में एक मात्रा कम होती थी, अत' इकार का प्रयोग किया है, जिससे छन्दोभङ्ग न हो। एव जे-शब्दप्रयोग में-'लभइ जे पेक्खेउ'। यहाँ जे पादपूर्ति मात्र के लिये है। 'पेक्खेउ' यहाँ 'ए च क्त्वा' से एकार करने से पादपूर्ति होगी। अन्यथा फिर भी एक मात्रा न्यून होने से छन्दोभङ्ग हो जायगा। 'ण र तए वि कहिओ सो'। यहाँ रेफ पादपूर्त्यर्थमात्र है ॥

## आनन्तर्ये णवरि ॥ ८ ॥

णवरि इत्ययं शब्द आनन्तर्ये निपातसंज्ञो भवति। णवरि (स्पष्टम्) ॥

आनन्तर्ये णवरि—अनन्तरस्य भाव आनन्तर्यम्, तस्मिन् णवरि इत्यय निपातो वर्तते। णवरि छिण्ण सीस रणे रिउणो। अनन्तर छिन्न शीर्षं रणे रिपो। अत्र णवरिशब्द शिरश्छेदनस्य आनन्तर्यं द्योतयति। केचित्तु-'णवरि केवलानन्तर्ययो' इत्येव सूत्र पठन्ति। तन्मते-रणे रिपो केवल शिरश्छिन्नम्-इत्यपि भवति ॥ ८ ॥

आन-इति। आनन्तर्य अर्थ में 'णवरि' इस निपात का प्रयोग होता है। 'णवरि छिण्णं सीसं रणे रिउणो'। इसके अनन्तर संग्राम में शत्रु का शिर काट दिया। यहाँ णवरि-शब्द आनन्तर्य अर्थ को कहता है। कईएक आचार्य-'णवरि केवलानन्तर्ययोः' ऐसा सूत्र मानते हैं। उनके मत से केवल अर्थ में भी 'णवरि' शब्द है। तो यह भी अर्थ होगा कि-केवल शिर काटा ॥ ८ ॥

## ( उ क्षेपविस्मयसूचनासु । )

उ क्षेपविस्मयसूचनासु[3]—क्षेप. = तिरस्कार। विस्मय = आश्चर्यम्। सूचना=

---

१ केवलमन्नमित्यर्थः। केचित्तु अन्यशब्दस्य ३-२ यलोप, २-४२ न-ण, ३-५० णद्वि०, शे० पू०। २. नेद भामहवृत्तौ सूत्रम्। ३. नास्तीद भामहवृत्तौ सूत्रम्।

अभिप्रायपैशुन्यम् । 'उत्यर्थेषु उ इति निपातः' प्रयुज्यते । उ अम्ह ण तेण कज्जं । उ अस्माक न तेन कार्यम् । अत्र तस्य प्रयोजनेऽपि प्रयोजनं नास्तीति अधिक्षेपो बोध्यते । उ सो एस इह कुदो आअदो । उ स एष इह कुत आयतः । अत्र उशब्दः तदागमने आश्चर्यं जनयति । सहि उ विलक्खो व्व । सखि ! उ विलक्ष इव । अत्र वैलक्ष्यजनककारणाभिप्रायस्य सूचना उशब्देन द्योत्यते ॥

उ-इति । क्षेपादिक अर्थों में उ इस निपात का प्रयोग होता है । क्षेप = तिरस्कार । विस्मय = आश्चर्य । सूचना = अभिप्राय का संक्षेप कहना । क्षेप-'उ अम्ह न तेण कज्ज' । उ-मुझे उससे कोई कार्य नहीं है । कार्य रहते हुये भी कार्य का निषेध करना तिरस्कार है । उ-पद से उसका बोध होता है । आश्चर्य-'उ सो एस इह कुदो आअदो' । यहाँ उशब्द उसके आगमन में आश्चर्य को कहता है । सूचना-'सहि उ विलक्खो व्व' । हे सखि ! वह विलक्ष-सा हो गया ! यहाँ वैलक्ष्योत्पादक कारण के अभिप्राय की सूचनामात्र उशब्द से प्रकाशित होती है ॥

## किणो प्रश्ने[1] ॥ ९ ॥

किणो इत्ययं शब्दः प्रश्ने निपातसंज्ञो भवति । किणो धुव्वसि ( ८-५७ य = व्व, ७-२ थास् = सि ) । किणो हससि ( किणो स्प०, ७—२ सिप् = सि ) । किन्नु धूयसे । किन्नु हससि ॥ ९ ॥

किणो प्रश्ने —किणो-इति निपात प्रश्नेऽर्थे वर्तते । सुहअ किणो कहेसि म । सुभग ! किं कथयसि माम् । अत्र किणो इति प्रश्नार्थवाचक । कीस-किमर्थे वर्तते । किणो-इति तु प्रश्ने । इत्यनयो अर्थाभेदे अर्थभेदो न कर्तव्य । तथा चोक्तम्-'सम्भवत्येकवाच्यत्वे वाक्ये भेदश्च नेष्यते' ॥ ९ ॥

किणो-इति । किणो यह निपात प्रश्न अर्थ में है । 'सुहअ किणो कहेसि मं' । हे सुभग मुझे क्या कहते हो ? यहाँ किणोशब्द प्रश्नार्थ में है । कीस यह किमर्थ में है और किणो यह प्रश्न में है । इस प्रकार इनका परस्पर अर्थ में अभेद ही है । अर्थ में भेद नहीं करना । कहा भी है कि-एक वाच्य रहने पर वाक्य भेद नहीं करना-इति ॥ ९ ॥

## अव्वो[2] दुःखसूचनासम्भावनेषु ॥ १० ॥

अव्वो इत्ययं शब्दो दुःखसूचनासम्भावनेषु निपातसंज्ञो भवति । दुःखे-अव्वो कज्जलरसरञ्जिएहिं अच्छीहिं[3] ( अव्वो स्प०, कज्जलरसेति संस्कृतसमः शब्दः, रञ्जितेत्यस्य २-२ तलोपः, ५-१२ अ = ए, ५-५ भिस् = हिं । अक्षि २-३० क्ष = छ, ३-५० छद्वि०, ३-५१ च् = छ् , ४-२० स्त्रीत्वे ई, ५-५ भिस् = हिं ) । सूचनायाम्-अव्वो अवरं विअ ( २-२५ प = व, ५-३ अमोऽकारलोपः, ४-१२ मबिं०, शे० ९-३ सू० स्प० ) । सम्भावने-अव्वो णमिच अणुं ( ३-१ दलोपः, ३-५० तद्वि०, ४-१२

१ किणो कीस किमु परिप्रश्ने । का० पा० । २ अव्वो अव्वो, वो । अव्वो दुःखसूचनासम्भावनेषु । का० पा० । ३ प्राकृते द्विवचनाभावात् बहुवचनम् ।

मर्कि० )। अहो कज्जलरसरञ्जिताभ्यामक्षिभ्याम्। अहो अपरमिव। अहो पलमिवाञ्जुम् ॥ १० ॥

अव्वो दु खसूचनासंभाषणेषु[1]—दु खे, सूचनायां, सम्भाषणे च अव्वो इति निपातो वर्तते। 'अव्वो मह पिअविरहो'। अव्वो मम प्रियविरहः। इत्यत्र अव्वो इति निपातो विरहदु खातिशयावेदक। सहि! एस निट्ठुरो अव्वो'। अत्र अव्वोशब्द' अतिनिष्ठुरतासूचक। सख्या सह संभाषणेऽपि अव्वोशब्द इहावस्थित। तदर्थद्योतनद्वारेण प्रयुक्त। अव्वो-इति निपात आश्चर्यद्योतनेऽपि क्वापि दृश्यते। अव्वो वल्लह किमिणं। आश्चर्यं वल्लभ! किमिदम्। अत्राश्चर्यद्योतकोऽयम् अव्वोशब्द ॥ १० ॥

अव्वो इति। दु खादिक अर्थों में निपात अव्वो का प्रयोग होता है। 'अव्वो मह पिअविरहो'। यहाँ अव्वो यह निपात प्रियविरहदुखातिशय का सूचक है। 'सहि एस निट्ठुरो अव्वो'। यहाँ अत्यधिक निष्ठुरतासूचक है। यहाँ अव्वोशब्द संभाषण में भी है। क्योंकि उसी अर्थ को सभाषण द्वारा सूचित करता है। अव्वो यह आश्चर्य प्रकाशन में भी होता है। अव्वो वल्लह किमिणं। हे प्रिय! यह क्या है? यहाँ आश्चर्यसूचक अव्वोशब्द है ॥ १० ॥

## अलाहि निवारणे ॥ ११ ॥

अलाहि इत्ययं शब्दो निवारणे निपातसंज्ञो भवति। अलाहि कलहलेसेण। अलाहि कलहबन्धेण। ( संस्कृतसमौ कलहो बन्धश्च, २-४३ श् = स्, ५-४ टा=ण, ५-१२ ए, शे० स्प० )। अलं कलहलेशेन। अलं कलहबन्धेन ॥ ११ ॥

अलाहि निवारणे—अलाहि इत्यय निपात निवारणेऽर्थे वर्तते। अलाहि तुम्हे अम्हणामेण। अल तव अस्मदीयनाम्ना। अन्य कश्चिन्नामग्रहणात् अलाहि-इत्यनेन निपातेन प्रतिषिध्यते ॥ ११ ॥

अलाहीति। निवारण अर्थ में अलाहि यह निपात है। अलाहि तुम्हे अम्हणामेण। हमारा नाम न लीजिये और किसी का नाम लें। यहाँ अलाहि इस निपात से नामग्रहण का प्रतिषेध है ॥ ११ ॥

## अइ-वले सम्भाषणे ॥ १२ ॥

अइ, वले इत्येतौ शब्दौ सम्भाषणे निपातसंज्ञकौ भवतः। अइ मूलं पसुसइ ( अइ स्प०, मूलं संस्कृतसमः, शे० ३-३ रलोपः, २-४३ श, ष् = स्, ३-२ यलोपः, ८-४६ उद्दीर्घः, ७-३१ ति = इ)। वले किं कलेसि ( वले स्प०, किं संस्कृतसम', २-२ यलोप', ७-२ सिप्=सि, ७-२४ एत्वं कले, शे० स्प० )। अपि मूलं प्रशुष्यति। वले किं कलयसि ॥१२॥

अइ-रणे संभाषणे[2]—अइ-रणे-इत्येतौ निपातौ सभाषणे = निरूपणेऽर्थे वर्तेते।

१ सञ्जीवन्यादिसमतः पाठः।     २. 'रणे' इत्यस्य स्थाने 'वले' इति भामहे पाठः।

अइ पिअतम खणं दिअहो । अयि प्रियतम ! क्षणं दिवसः । अत्र क्षणम्-अर्थं संभावयन् 'अइ'शब्दः संभाषितः । अज्ज रणे णाह गम्मइ घराउ । अद्य नाथ ! गम्यते गृहात् । अत्र रणे शब्दः गमनस्य संभाषणं बोधयति ॥ १२ ॥

अइ–इति । संभाषण और निरूपण अर्थ में 'अइ–रणे' ये दो निपात प्रयुक्त होते हैं । 'अइ पिअतम खणं दिअहो' । यहाँ क्षणमात्र अभी दिन है, इस अर्थ को सूचित करता हुआ संभाषण में अइशब्द का प्रयोग है । एवम्–'अज्ज रणे णाह गम्मइ घराउ । यहाँ 'रणे' यह सप्तम्यन्तानुकरणस्वरूप निपात गमन–संभाषण में प्रयुक्त है, संग्रामार्थ रणशब्द का सप्तम्यन्त रूप नहीं है । तो यह अर्थ होता है–हे नाथ ! आज घर से जा रहे हैं । यहाँ गमन–संभाषण में 'रणे'शब्द प्रयुक्त है ॥ १२ ॥

## णवि वैपरीत्ये[1] ॥ १३ ॥

णवि इत्ययं शब्दो वैपरीत्ये निपातसंज्ञो भवति । णवि तह पहसइ बाला ( तह १–१० सू० स्प०, ३–३ स्लोपः, ७-१ ति = इ, बाला इति संस्कृतसमः ) । विपरीतं तथा प्रहसति बाला ॥ १३ ॥

## सू कुत्सायाम् ॥ १४ ॥

सू इत्ययं शब्दः कुत्सायां निपातसंज्ञो भवति । सू सिविणो ( सिविणो १–३ सू० स्प० ) । धिक् स्वप्नः ॥ १४ ॥

धू[2] कुत्सायाम्—धू-इत्यय निपात कुत्सायां वर्तते । कुत्सा = निन्दा । धू तुह सवत्तिचरिअं । धिक् तव सपत्नीचरितम् । अत्र धूशब्देन सपत्नीचरितस्य निन्दा प्रतीयते ॥ १४ ॥

धू–इति । धू यह निपात निन्दा अर्थ में है । 'धू तुह सवत्तिचरिअं' । तुम्हारी सवत के चरित्र को धिक्कार है । यहाँ धूशब्द से निन्दा प्रतीयमान है ॥ १४ ॥

## रे–अरे–हिरे सम्भाषणरतिकलहाक्षेपेषु ॥ १५ ॥

रे, अरे, हिरे इत्येते शब्दाः सम्भाषण–रतिकलहा-क्षेपेषु निपातसंज्ञा भवन्ति यथासंख्यम् । रे मा करेहि । णाओसि अरे । दिट्ठोसि हिरे ( रे स्प०, संस्कृतसमो मा-शब्दः, १२–१५ कृञ् = कर, ७–३४ एत्वं, १२–२७ परस्मैपदं, संस्कृतवत् लोटः सेर्हिः ) । ( २–४२ न् = ण, २–२ गलोपः, ७–६ स्प० सि, अरे स्प० ) । ( १–१८ ऋ = इ, ३ = १० ष्ट = ठ, ३–५० ठद्वि०, ३–५१ ठ–ट, ५–१ ओ ) । रे मा कुरुष्व । नागोसि अरे । दृष्टोऽसि हिरे ॥ १५ ॥

रे–अरे–हरे संभाषणरतिकलहक्षेपेषु[3]—सभाषणम् = पारस्परिककथनम् । रतिकलह = निधुवनकेलिः । क्षेपः = तिरस्कारः । एष्वर्थेषु यथासंख्य रे, अरे, हरे-इति निपाता वर्तन्ते । णिहुअं जं रे जपसि । निभृतं यत् रे जल्पसि । अत्र रेशब्दः सभा-

---

१. नेदं सूत्र सजीवन्यादिषु, अतो नास्य चन्द्रिकाव्याख्या, नापि हिन्दीटीका ।
२. 'धू'स्थाने 'सू' इति भामहे । ३ सजीवनीसमतः पाठः ।

पणं द्योतयति । देहि अरे णिवसण । देहि अरे निवसनम् । अत्र अरेशब्द. प्रार्थनाभिप्रायरतिकलहद्योतकतां बिभर्ति । हरे घट्ठो । अहो धृष्ट' । अत्र हरेशब्द. धृष्टत्वलक्षणम् अधिक्षेपम् उद्बोधयति ॥ १५ ॥

रे अरे-इति । सम्भाषणादिक अर्थों में रे-अरे-हरे का यथाक्रम प्रयोग होता है । संभाषण = परस्पर बातचीत करना, उसमें 'रे' इस निपात का, रतिकलह = निधुवन केलि, इसमें 'अरे' इस निपात का, क्षेप = तिरस्कार, इसमें 'हरे' इस निपात का प्रयोग होता है । णिसुअ अं रे जपसि । हाँ सुना, जो कहते हो । यहाँ रे-शब्द से संभाषण प्रतीत है । देहि अरे णिवसण । यहाँ अरेशब्द वसनप्रार्थना से रतिकलह को द्योतित करता है । हरे धिट्ठो । यहाँ हरेशब्द धृष्टस्वरूपात्मक अधिक्षेप = तिरस्कार को कहता है ॥ १५ ॥

## म्मिवमिवविआ इवार्थे ॥ १६ ॥

म्मिव, मिव, विअ इत्येते शब्दा इवार्थे निपातसंज्ञका भवन्ति । गअणं म्मिव, गअणं मिव, गअणं विअ कसणं ( २-२ गलोपः, २-४२ न् = ण् , ५-३० बिं० ), ( अन्त्ये ३-६१ वर्णे नित्यं विप्रकर्ष' । पूर्वस्य तत्स्वरता च ) । गगनमिव कृष्णम् ॥ १६ ॥

पिव-मिव-विव-व इवार्थे[1]—एते चत्वार शब्दा निपाता इवार्थे उपमानोत्प्रेक्षादौ वर्तन्ते । रभा पिव रूवेण । रम्भेव रूपेण । हरिणी मिव तरलपेच्छिएण । हरिणीव तरलप्रेक्षितेन । हसी विव गमणेण । हसीव गमनेन । सीआ व्व सईत्तणेण । सीतेव सतीत्वेन । अत्र 'सेवादिषु चे'ति वकारस्य द्वित्वम् । एवमन्येऽपि निपाता सन्ति ।

अनारम्भे च क्षेपे च पश्चात्तापविषादयो ।
निश्चये च बुधै प्रोक्तो निपातो हन्त इत्ययम् ॥ १ ॥
हन्त वाच्यविभूषायां हे इत्यामन्त्रणे भवेत् ।
आ शब्दोऽपि भवत्यर्थे नाम इत्येवमर्थक ॥ २ ॥
हञ्जे-हण्डे-हले-इत्यादय सम्बोधने मता ।
इवार्थे ण इति क्वापि हा खेदानुपतापयो ॥ ३ ॥
अल-अल विषादार्थौ अप्यर्थोऽपि इ इत्ययम् । इति ।

एव चवादय शब्दाः अर्थानतिक्रमेण अव्ययत्वेन अवगन्तव्या ।

च वा ह हे अहो हंहो णमे आहो हहो खिहो ।
अविमो मुत्तु अह हो इत्याद्यास्तु चवादय ॥
आहो अहो उताहो च है हे भो भोस्तथैव च ।
हहो इत्यादय शब्दा स्यु संबोधनबोधका ॥–॥ १६ ॥

पिवेति । ये चार पिवादिक निपातशब्द इवार्थ में अर्थात् कहीं उपमान में और कहीं उत्प्रेक्षा अर्थ में होते हैं । 'रंभा पिव रूवेण' । यहाँ पिवशब्द से सादृश्य प्रतीति है ।

---

१ एष पाठ सञ्जीवन्यनुगामी ।

रूप से रम्भा के सदृश । 'हरिणी मिव तरलपेच्छिरण' । तरल-प्रेक्षण से हरिणी के सदृश । यहाँ मिवशब्द इवार्थ में है । 'हसी विव गमणेण' । यहाँ विवशब्द इवार्थ में सादृश्य बोधक है । एव 'सीअ व्व सईत्तणेण' । यहाँ वशब्द इवार्थ में है । 'सेवादिषु च' से वकार को द्वित्व होगा । यहाँ कहीं-कहीं प्रसङ्गानुरूप उत्प्रेक्षा भी हो सकती है । जैसे रूप से रम्भा हो । गमन से मानो हंसी ही है । इत्यादि यथास्थान समझ लेना । इसी प्रकार और भी निपात हैं और वे विभिन्न अर्थों में होते हैं । जैसे—'हन्त' यह अव्यय अनारम्भ में, क्षेप=तिरस्कार में, पश्चात्ताप=कृतकार्य के सताप में, विषाद=दुःख में और निश्चय=ऐसा ही है—इसमें, विद्वानों ने इन अर्थों में हन्त अव्यय को माना है और वक्तव्य के सौन्दर्य में भी हन्तशब्द होता है । 'हे' यह सबोधन में । 'आ' यह हो गया, हो रहा है—इस अर्थ में है । 'नाम' यह ऐसा ही है इसमें और सभावना में भी होता है । हञ्जे=चेटी के संबोधन में, हण्डे=नीच के सबोधन में, हले=सखी के सबोधन में हैं । 'ण' इवार्थ में, 'हा' खेद और संताप अर्थ में है । अलं=यह पर्याप्त अर्थ में और विषाद अर्थ में है । 'इ' यह अव्यय अपि के अर्थ में है । इसी प्रकार च-वा इत्यादिक अव्ययों को भी जानना । च, वा, ह, हे, अहो, हहो, णमे, आहो, हही, सिहो, अविमो, मुत्तू, अह, हो—इत्यादिक चादि अव्यय हैं । आहो, अहो, उताहो, है, हे, भो, भो., हहो—इत्यादिक सबोधन में प्रयुक्त होते हैं, क्योंकि सबोधन के बोधक हैं ॥ १६ ॥

## अज्ज आमन्त्रणे ॥ १७ ॥

अज्ज इत्ययं शब्द आमन्त्रणे निपात्यते । अज्ज महाणुहाव ! किं करेसि ( अज्ज स्प०, २-४२ न्=ण, २-२७ भ=ह, प्राय इति २-२ वलोपो न । ७-२ सि, शेषं ९-१५ सू० स्पष्टम् ) । अहो महानुभाव ! किं करोषि ॥ १७ ॥

वेब्ब[1] आमन्त्रणे—आमन्त्रणम्=आह्वानम् । तस्मिन् अर्थे वेब्ब इत्यय निपातो वर्तते । वेब्ब देवर ! जाणसु । हे देवर ! जानीहि । अत्र वेब्बशब्द आमन्त्रणार्थं द्योतयति । देश्या पुनरयम् अन्यार्थेष्वपि दृश्यते । यथा-'वेब्बवेब्बलिअौ स्यातां वारणे तूरणे तथा' ॥ १७ ॥

वेब्ब-इति । वेब्ब यह निपात आमन्त्रण अर्थ में रहता है । वेब्ब देअर ! जाणीहि । हे देवर ! आप जानिये । यहाँ आमन्त्रण अर्थ में वेब्बशब्द है । यह आमन्त्रण को सूचित करता है । वेब्ब यह निपात देशी में अन्य अर्थों में भी प्रयुक्त है । 'वेब्ब-वेब्ब-लिअ' ये वारण अर्थ में और तूरण=शब्दकरना अथवा शीघ्रता में हैं ॥ १७ ॥

## शेषः संस्कृतात् ॥ १८ ॥

इति श्रीवररुचिकृते प्राकृतप्रकाशे नवमः परिच्छेदः ।

---

१. 'अज्ज' इति 'वेब्ब' इत्यस्य स्थाने पाठो भामहवृत्तौ दृश्यते ।

**उक्तादन्यः शेषः। प्रत्ययसमासतद्धितलिङ्गवर्णादिविधिः शेषः संस्कृतादवगन्तव्यः। इह ग्रन्थविस्तरभयान्न दर्शितः॥ १८॥**

इति श्रीभामहविरचितायां मनोरमायां निपातसंज्ञाविधिर्नाम नवमः परिच्छेदः।

शेषाः[1] संस्कृतात्—उक्तेभ्योऽन्ये शेषाः। सुप्‌तिङ्‌क्तद्धितसमासप्रत्याहारकारकलिङ्गसङ्ख्यादयोऽत्र नोक्ताः, ते संस्कृतात् समीचयावगन्तव्याः। उक्तं च-'प्राकृतं संस्कृतयोनि'-इति। प्रकृतेः संस्कृतात् आगतं प्राकृतम्। संस्कृतं च—

इन्द्रश्चन्द्रः काश्यपश्च कपिलः शाकटायनः।
पाणिन्यमरजैनेन्द्रा इत्यष्टौ शाब्दिका मताः॥

एभिः प्रणीतं प्रकृतिप्रत्ययविभागेन। तत्सपादनं लोकप्रसिद्धम्। क्वचिच्च-उक्तलक्षणमपि बाधित्वा एकदेशसंस्कृतमुपपाद्य व्याक्रियते। यथा—'वच्चन्ते पिअम्मि भणिअं'। व्रजति प्रिये भणितम्। व्रज् गतौ। शतृ-प्रत्यये। 'च्चो व्रजिनृत्योः' इति जकारस्य 'च्च' इत्यादेशः। 'न्तमाणौ शतृशानचोः' इति न्त इत्यादेशः। एवं वच्चन्तशब्दात् सप्तम्येकवचने ङि। 'ङेरेम्मी' इति ए इत्यादेशः। क्वचिदपि लोपः-न्तगतस्याकारस्य लोपः। वच्चन्ते। 'सर्वत्र लवराम्' इति रेफस्य, 'कगचजे'ति यकारस्य च लोपः। 'ङेरेम्मी' इति म्मि। पिअम्मि। शतृ-क्तप्रत्ययाविधानात् संस्कृतस्यैकदेशमुपपाद्य व्याख्यातम्। क्वचिच्च संस्कृतोपपाद्यमाश्रित्य एकदेशेन व्याख्यायते। यथा—शिरस्-शब्दस्य तृतीयैकवचने टाविभक्तौ 'अन्त्यस्य हलः' इति सलोपः। 'टामोर्णः' इति टाप्रत्ययस्य णः। 'ए च सुप्यङिङसोः' इति एत्वम्। 'शषोः सः' इति सः। एवं सिरेण-इति प्राप्नोति। संस्कृते शिरसा-इति तृतीयासिद्धमङ्गीकृत्य 'शषोः सः' इति सः। सिरसा-इत्यपि भवति। एवं-भगम् = ऐश्वर्यम् अस्यास्तीति मत्वर्थे 'आल्विल्लोल्लालवन्तेन्ता मतुपः' इति मतुपः स्थाने वन्त इति। ततः तृतीयैकवचने टा, 'टामोर्णः' इति णः। 'ए सुप्यङिङसोः' इत्येकारः। भगवन्तेण इति। संस्कृते सिद्धं भगवता-इति रूपमाश्रित्य, 'कगचजे'ति गलोपः। 'ऋत्वादिषु तो दः' इति दकारः। भअवदा। वकारस्यापि लोपे 'भअअदा' इत्यपि भवति। एवम्-किम्शब्दस्य सप्तम्येकवचने कस्मिन् काले इति विवक्षामाश्रित्य 'आहे-इआ काले' इति पर्यायेण भवतः। 'किमः कः' इति कः। 'क्वचिदपि लोपः' इत्यलोपः। काहे, कइआ इत्येतौ एव भवतः। संस्कृतसिद्धम् कदा-इति प्रयोगमाश्रित्य 'कगचजे'ति दलोपः। कआ-इत्यपि भवति। एवं यथासिद्धं कविप्रयोगमाश्रित्य व्याख्येयम्॥ १८॥

इति श्रीमहामहोपाध्याय-प० मथुराप्रसादकृतायां प्राकृतप्रकाशस्य चन्द्रिकाख्यटीकायां निपातविधिर्नाम नवमः परिच्छेदः समाप्तः।

---

१. सञ्जीवन्यादिसमतोऽयं पाठः।

शेषा इति । उक्त से अतिरिक्त शेष कहाता है अर्थात् जो प्राकृत के नियमों में नहीं कहा गया है वह शेष है, उसका ग्रहण संस्कृत से करना । जैसे सुप्-तिङ्-तद्धित-समास-प्रत्याहार-कारक-कर्ता-कर्म-करण-सम्प्रदानादिक, लिङ्ग=पुंलिङ्ग-स्त्रीलिङ्ग-नपुंसकलिङ्ग, संख्या=एकवचन, द्विवचन, बहुवचनादिक । ये सब संस्कृत से लिये जायँगे । कहा भी है कि—'प्राकृतं संस्कृतयोनि'=प्राकृत संस्कृत से ही उत्पन्न है । नियान बालक, स्त्री, वृद्ध, मूर्ख, स्फुट संस्कृत का उच्चारण नहीं कर सकते हैं, एवं विकृत उनका उच्चारण ही प्राकृत है । जैसे उष्ट्र का उट्ट । हस्त का हत्थ । कर्म का कम्म इत्यादि । प्रकृति=संस्कृत, उससे जो हुआ वह प्राकृत अर्थात् संस्कृतोद्भव ही प्राकृत है । संस्कृत=स्वतः समुच्चरित शब्द हैं । परंतु दो हजार धातु-प्रकृति-प्रत्यय-विभाग आदि करके आठ आचार्यों ने दिखाये हैं, वे सब आचार्य शाब्दिक हैं । यथा—इन्द्र, चन्द्र, काश्यप, कपिल, शाकटायन, पाणिनि, अमरसिंह और जैनेन्द्र ये आठ शाब्दिक हैं अर्थात् व्याकरण के निर्माता हैं । इन्होंने प्रकृति-प्रत्ययादि का विभाग करके शब्द-स्वरूप बताया है, वही नियम सूत्रादि व्याकरण कहाता है । व्याकरण-शब्द लोक में प्रसिद्ध है । कहीं पर व्याकरण के नियमों को बाधकर एकदेश संस्कृत का लेकर प्राकृत का साधुत्व देते हैं । जैसे—'वचन्ते पिअस्मि भणिअ' । यहाँ उक्त सूत्रों से 'च' आदेश 'न्त' आदेश, ङि को ए । यह सब प्राकृत सूत्रों से है । परंतु शतृ प्रत्यय, क्त-प्रत्यय ये संस्कृत से ग्रहण किये हैं । इस प्रकार संस्कृत का एकदेश लेकर साधुत्व है । कहीं पर सस्कृत के पूरे सिद्ध शब्द को लेकर प्राकृत के कार्य करके प्राकृत का प्रयोग करते हैं । जैसे—शिरस् शब्द की तृतीया का एकवचन निर्दिष्ट सूत्रों से अन्त्यलोप, टा को ण, श को स, सिरेण होता है और शिरस्-शब्द के तालव्य श को स करके सिरसा भी होता है । एव-भगवता अस्त्यर्थ में मतुप्प्रत्यय, मतुप् को निर्दिष्ट सूत्र से वन्त आदेश, टा को ण आदेश, अकार को एकार, भगवन्तेण होगा और 'भगवता' इस सस्कृतसिद्ध रूप को लेकर तकार को ऋत्वादि से द आदेश, उक्त सूत्र से गलोप, भअअदा भी होगा । एव-किम्शब्द से सप्तमी में काल=समय अर्थ की विवक्षा में आहे, इआ पर्याय से प्रत्यय होंगे । किम् को क आदेश, अकार का लोप । काहे, कइआ । क्वचिद्-ग्रहण से अकार का लोप कइआ में नहीं होगा । इस प्रकार काहे, कइआ ये दो होंगे । कदा इस संस्कृत-सिद्ध प्रयोग में 'कगचज' से दकार का लोप करने से कआ यह सिद्ध होता है । इस प्रकार तीनों प्रयोगों का यथारुचि भावुक कवि प्रयोग कर सकता है । अन्यत्र भी इसी प्रकार से साधुत्व मान कर प्रयोग कर सकते हैं । इति ॥ १८ ॥

इति श्री म० म० पं० मथुराप्रसाददीक्षितकृतायां प्रदीपनामकसरल
हिन्दी-टीकायां नवमः परिच्छेदः समाप्तः ।

# अथ दशमः परिच्छेदः

## पैशाची ॥ १ ॥

**पिशाचानां भाषा पैशाची, सा च लक्ष्यलक्षणाभ्यां स्फुटीक्रियते ॥**

भिल्लीवेषोल्लसद्भूषां सविद्युल्लोमतल्लिकाम् ।
भक्ताभीष्टप्रदामम्बामाश्रये रेणुकां शिवाम् ॥ १ ॥

नवीनां व्याख्यां पूरयितुकामेन प्रयत्यते सम्प्रति । सा च यथा—

पैशाची—पिशाचाना जातिविशेषाणा योनिविशेषाणा वा परस्पर व्यवह्रियमाणा भाषा पैशाचीति कथ्यते । सा तु लक्ष्यलक्षणाभ्या स्फुटीक्रियते । अधिकारोऽयमापरिच्छेदसमाप्ते ॥ १ ॥

पैशाचीति । जातिविशेष अथवा योनिविशेष के लोगों को 'पिशाच' कहते हैं । परस्पर की बोलचाल में आनेवाली उनकी भाषा को पैशाची भाषा कहते है । उसे उदाहरणों तथा लक्षणों द्वारा स्पष्ट किया जाता है । इस परिच्छेद की समाप्ति तक यह अधिकार सूत्र है अर्थात् इस परिच्छेद के सूत्रों द्वारा बनाये गये रूप पैशाची भाषा के है—ऐसा समझना चाहिए ॥ १ ॥

## प्रकृतिः शौरसेनी ॥ २ ॥

**अस्याः पैशाच्याः प्रकृति· शौरसेनी । स्थितायां शौरसेन्यां पैशाचीलक्षणं प्रवर्त्तयितव्यम्'[1] ॥ २ ॥**

प्रकृतिः शौरसेनी—अस्या पैशाचीभाषाया प्रकृति = मूल हि शौरसेनी शूरसेनाना भाषास्तीति शौरसेनीनिष्पन्नेषु पदेषु पैशाचीलक्षण प्रवर्तयितव्यमिति बोध्यम् ॥

प्रकृतिरिति । पैशाची भाषा का मूल आश्रय शौरसेनी भाषा है, अत शौरसेनी के नियमों से बने पदों में पैशाची के लक्षणों की प्रवृत्ति करनी चाहिए । तब वे पैशाची के पद समझे जायँगे ॥ २ ॥

## वर्गाणां तृतीयचतुर्थयोरयुजोरनाद्योराद्यौ[2] ॥ ३ ॥

**वर्गाणां तृतीयचतुर्थयोर्वर्णयोरयुक्तयोरनादौ वर्तमानयो· स्थाने आद्यौ प्रथमद्वितीयौ भवतः । गकनं ( ५–३० सार्वि०, २–२ सूत्रबाधः । एवम्-अग्रेऽपि यथास्थानेषु पूर्वसूत्राणां बाधो ज्ञेय· ) । मेखो । राचा । णिच्छरो । वटिसं । दसवतनो । माथवो । गोविन्तो । केसवो । सरफसं ।**

---

१ इति वेदितव्यमिति शेष । २ केचित् 'अनादावयुज '–इति विभज्य अनादौ वर्तमानाः वर्णा सर्वे असयुक्ता प्रयोक्तव्या । कसणो । पणय । कृष्ण । पण्यम् । तत 'तथयोर्दधौ' । ( उक्तोऽर्थ ) इति योगविभागेन व्याचख्यु· । का० पा० ।

सलफो । णिज्झरो ( ३-५१ सू० स्प०, अत्र झ् = च् , झ् = छ ) बटिसं ( २-२३ सू० स्प०, अत्र ड = ट, शे० स्प० ) । ( दसवतन-केसव-सलफ इत्येतेषु २-४३ श = स, अन्यत्सर्वं स्पष्टम् । विभक्तयः पञ्चमपरिच्छेदस्थ-सूत्रैर्यथालक्षणं साधनीयाः । शे० स्प० ) । अयुजोरिति किम् ? संग्गामो (३-३ रलोपः, ३-५० गद्वि०, ५-१ ओ ) । संग्रामः । वग्घो इत्यादि ( ३-२ यलोपः, ३-३ रलोपः, ३-५० घद्वि०, ३-५१ घ् = ग् , ४-१ ह्रस्वः, ५-१ ओ ) । अनादाविति किम् ? गमनं ( स्प० ) इत्यादि । गगनम् , मेघः, राजा, निर्झरः, बडिशम् , दशवदनः, माधवः, गोविन्दः, केशवः, सरभसम् , शलभः, संग्रामः, व्याघ्रः, गमनम् ॥ ३ ॥

वर्गाणा तृतीयचतुर्थयोरिति—कादि-मान्तेषु पञ्चविंशतिवर्णेषु पञ्चपञ्चवर्णात्मक एको वर्ग । एव पञ्च वर्गा सन्ति । ते च यथा—१ कवर्ग , २ चवर्ग , ३ टवर्ग , ४ तवर्ग , ५ पवर्ग इति । तेषु वर्गेषु प्रत्येकस्य वर्गस्य आदौ न वर्तमानयो असयुक्तयो तृतीयचतुर्थयोर्वर्णयो स्थाने तस्यैव वर्गस्य क्रमश प्रथमद्वितीयौ वर्णौ भवत । यथा—कवर्गीयतृतीयवर्णस्य गकारस्य स्थाने कवर्गीय एव प्रथमो वर्ण ककार स्यात् । गगन—इति शौरसेनीनिष्पन्नस्य शब्दस्य अनादिस्थितमसयुक्त तृतीयमक्षर गगनेत्यत्र द्वितीय-गकाररूप तस्य स्थाने तद्वर्ग्यं प्रथममक्षर ककाररूप स्थापनीय, तेन 'गकन' शब्दरूप पैशाचीसमत बोध्यम् । उदाहरणानि—गकन = गगन ( गगनम् ) । मेखो = मेघो ( मेघ ) । राचा = राजा ( राजा ) । णिच्छरो = णिज्झरो ( निर्झर ) । बटिस = बडिस (बडिशम् ) । दसवतनो = दसवदनो (दशवदन ) । माथवो = माधवो (माधव ) । सलफो = सलभो ( शलभ ) । अयुजोरिति किम् ? सगामो ( सग्रामः ) । अनाद्योरिति किम् ? गमन ( गमनम् ) ॥ ३ ॥

वर्गाणामिति । 'क' से 'म' तक पचीस अक्षर या वर्ण हैं । उनमें पांच पांच का एक-एक वर्ग है । एव पाँच वर्ग हैं, जो अपने प्रथम अक्षर के नाम से प्रसिद्ध हैं । जैसे—'क, ख, ग, घ, ङ' इन पाँच अक्षरों के समुदाय को कवर्ग कहते हैं । इसी प्रकार अन्य चार वर्ग 'चवर्ग, टवर्ग, तवर्ग तथा पवर्ग' के नाम से प्रसिद्ध हैं । आदि में न रहनेवाले, असयुक्त ( एक दूसरे से न मिले हुए=जोड़ अक्षर नहीं ) ऐसे उन वर्गों के तृतीय और चतुर्थ वर्णों के स्थान पर उसी वर्ग के क्रमश प्रथम और द्वितीय अक्षर होते हैं । ( गगनम् ) 'नपुसके' ६२ से सु को बिन्दु, इससे द्वितीय गकार के स्थान पर ककार, 'कगचज०' २ से प्राप्त लोप का बाध, गकन । ( मेघ ) 'अत ओत्सोः' ४२ से सु को ओ, इससे 'घ' को 'ख', 'खघ०' २३ से प्राप्त 'ह' का बाध, मेखो । ( राजा ) 'राज्ञश्च' ५-३६ से आ, इससे 'ज' को 'च', 'कग०' २ से प्राप्त लोप का बाध, राचा । (निर्झरः) 'सर्वत्र ल०' ५ से रलोप, इससे 'झ' को 'छ', 'शेषादेशयो०' ६ से द्वित्व, 'वर्गेषु' ७ से 'छ' को 'च', नो ण.'२५ से णत्व, 'अत ओत्' ४२ से ओकार, णिच्छरो । (बडिशम्)'शषोः सः' २६ से 'श' को 'स', इससे 'ड' को 'ट', ६२ से बिन्दु, बटिसं । (दशवदनः) 'शषोः सः' २६से स, 'अतः' ४२ से ओकार, इससे 'द' को 'त', 'कगच०' २ से प्राप्त लोप का बाध, दस-

वतनो। (माधवः) 'अतः'४२ से ओ, इससे 'ध' को 'थ', 'खघथ०' २३ से प्राप्त ह का बाध, माधवो। (शलभः) 'शषोः'२६ से स, ४२ से ओ, इससे 'भ' को 'फ', २३ से प्राप्त ह का बाध, सलफो। अयुजो.—ऐसा क्यों कहा? नहीं तो सग्राम में संयुक्त 'ग्रा' के स्थान में कादेश होता, संयुक्त होने से यहाँ नहीं हुआ। किन्तु (संग्रामः) में 'सर्वत्र' ५ से रलोप, आदिस्थ होने से ग को द्वित्व नहीं, ४२ से ओ, संगामो। अनाद्यो.—ऐसा क्यों कहा? नहीं तो (गमनम्) के प्रथम ग को भी क हो जाता, अनाद्योः कहने से आदिस्थ गकार होने से ककार नहीं हुआ, ६२ से बिन्दु, गमन॥ ३॥

## इवस्य पिवः ॥ ४ ॥

**इवशब्दस्य स्थाने पिव इत्ययमादेशो भवति। कमलं पिव मुखं (कमलं, मुखं संस्कृतसमौ शब्दौ, शे० स्प०)॥ ४॥**

इवस्य पिव'—इव इति सिद्धस्याव्ययस्य स्थाने पिव–इत्ययमादेश स्यात्। कमल पिव मुख (कमलमिव मुखम्)। कमल (अत्र सोर्बिन्दु), (मुख-इत्यत्रापि), इमावुभावपि शब्दौ सस्कृतेन समौ, केवलम् इवेत्यव्ययस्य स्थाने पिवादेश ॥ ४॥

इवस्येति। इव इस अव्यय के स्थान में पैशाची भाषा में पिव आदेश होता है। कमलम् इव मुखम्—यहाँ पर इव के स्थान पर पिव आदेश हुआ और कमलम् तथा मुखम् इन दोनों में 'नपुसके सोर्बिन्दु' से बिन्दु होने से रूप–सिद्धि हुई॥ ४॥

## णो नः ॥ ५ ॥

**णकारस्य स्थाने न इत्ययमादेशो भवति। तलुनी (स्प०)। तरुणी[1]॥**

णो न—पैशाचीभाषाया णकारस्य स्थाने सर्वत्रैव न इत्ययमादेश कर्तव्य। (तरुणी) अनेन नकार, तथा 'रसोर्लशा'विति हेमसूत्रेण लत्वम्। तथा च तलुनी॥५॥

ण इति। पैशाचीभाषा में सर्वत्र 'ण' इस अक्षर के स्थान पर 'न' यह आदेश करना चाहिए। (तरुणी) में हेमसूत्र 'रसोर्लशौ' से रुकार के रकार को लकार और प्रकृत सूत्र से णकार के स्थान पर नकार करने से 'तलुनी' यह बनता है॥ ५॥

## ष्टस्य सटः ॥ ६ ॥

**ष्ट इत्यस्य स्थाने सट इत्ययमादेशो भवति। कसटं मम वट्टइ (५-३० बिं०, मम तत्समः, ३-२२ र्तस्य टः, ३-५० टद्वि०, ७-१ त = इ)। कष्टं मम वर्तते॥ ६॥**

ष्टस्य सटः—अस्या भाषायां मूलादागतस्य 'ष्ट' इति वर्णस्य स्थाने 'सट' इति आदेशो भवति। (कष्ट मम वर्तते स्पष्टम्) कसट मम वट्टइ फसट॥ ६॥

ष्टस्येति। पूर्व में स्थित ष्ट इस अक्षर के स्थान में सट यह आदेश हो। कष्ट मम वर्तते स्पष्टम्—यहाँ कष्टशब्दगत 'ष्ट' के स्थान पर सट करने पर ६२ से बिन्दु 'कसट' हुआ, मम–यह सस्कृतसम है और ६-५० से सिद्ध भी है, वर्तते में ३-२२ 'र्तस्य टः' से र्त

---

१ रसोर्लशौ। ८।४।२८८। मागध्यां रेफस्य दन्त्यशकारस्य च स्थाने यथासख्य लकारस्तालव्यशकारश्च भवति। हे०। बाहुलकात् पैशाच्यामपि भवति।

को ट, ३-५० 'शेषादेश०' से ट्द्वित्व, तथा ७-१ 'तदिपो०' से त को इ = वट्टइ, स्पष्टम् में ३-३१ 'स्पस्म' इससे फ, प्रकृत से ष्ट को सट तथा 'सोर्बिन्दुर्नपुंसके' ५-३० से बिन्दु, फसटं बनेगा । फसटं मम वट्टइ फसटं ॥ ६ ॥

## स्नस्य सनः ॥ ७ ॥

स्न इत्यस्य स्थाने सन इत्ययमादेशो भवति । सनानं । सनेहो (स्प०, पू० विभक्तिः साध्या ) । स्नानम् । स्नेहः ॥ ७ ॥

स्नस्य सनः—सकारनकाराभ्यां सयुक्तस्य 'स्न' इति वर्णस्य स्थाने सन-इत्ययमादेशो भवति । सनानं = स्नानम्, सनेहो = स्नेह ॥ ७ ॥

स्नस्येति । संयुक्त 'स्न' के स्थान पर 'सन' यह आदेश होता है । ( स्नानम् ) स्ना के स्थान पर प्रकृत सूत्र से 'सना' हुआ और ५-३० से बिन्दु, सनानं । ( स्नेहः ) स्ने के स्थान पर 'सने' करने पर ५-१ से ओ, सनेहो ॥ ७ ॥

## र्यस्य रिअः ॥ ८ ॥

र्य इत्यस्य स्थाने रिअ इत्ययमादेशो भवति । भारिआ । भार्या ॥

र्यस्य रिअः—संयुक्तस्य 'र्य'-इत्यस्य स्थाने 'रिअ' इत्यादेशः स्यात् । ( भार्या ) रिआदेशे कृते भारिआ ॥ ८ ॥

र्यस्येति । सयुक्त अर्थात् र्-युक्त य के स्थान में 'रिअ' आदेश हो । भार्या में र्य के स्थान पर 'रिअ' आदेश प्रकृत सूत्रसे करने पर स्त्रीत्व होने से आकार, भारिआ ॥ ८ ॥

## ज्ञस्य ञ्ञः ॥ ९ ॥

ज्ञ इत्यस्य स्थाने ञ्ञ इत्ययमादेशो भवति । विञ्ञातो ( ५-१ ओ, शे० स्प० ) । सव्वञ्ञो ( ३-३ रलोपः, ३-५० वद्वि०, शे० स्प० पू० ) । विज्ञातः । सर्वज्ञः ॥ ९ ॥

ज्ञस्य ञ्ञः—जकार-ञकाराभ्यां सपन्नस्य ज्ञ-इत्यक्षरस्य स्थाने ञ्ञ-इत्यादेशः स्यात् । ( विज्ञात· ) = विञ्ञातो । ( सर्वज्ञ· ) = सव्वञ्ञो ॥ ९ ॥

ज्ञस्येति । 'ज्ञ' इस अक्षर के स्थान में 'ञ्ञ' यह आदेश हो । विज्ञातः—प्रकृत सूत्र से ञ्ञ करने पर ५-१ से ओ, विञ्ञातो । सर्वज्ञ·—'सर्वत्र लवराम्' से रलोप, 'शेषादेशयो·' से वद्वित्व, प्रकृत से ञ्ञ, 'अत ओत्सो·' से ओकार, सव्वञ्ञो ॥ ९ ॥

## कन्यायां न्यस्य ॥ १० ॥

कन्याशब्दे न्यस्य स्थाने ञ्ञ इत्ययमादेशो भवति । कञ्ञा ( स्पष्टम् ) ॥

कन्यायां न्यस्य—कन्याशब्दान्तर्गतस्य 'न्य'-त्यक्षरस्य स्थाने 'ञ्ञ' आदेशो भवति । कन्या = कञ्ञा ॥ १० ॥

कन्येति । कन्या-शब्द के 'न्य' के स्थान पर ञ्ञ आदेश होता है । कन्या । प्रकृत सूत्र से ञ्ञ-आदेश करने पर कञ्ञा ॥ १० ॥

## ज्ञ च ॥ ११ ॥

**ज्जशब्दस्य शौरसेनीसाधितस्य स्थाने च्च इत्ययमादेशो भवति। कच्चं। कार्यम्[1] ॥ ११ ॥**

ज्ञ च—'ज्ञ' इति लुप्तषष्ठीकं, च्चेति प्रथमान्त पदम्, शौरसेनीनियमसिद्धस्य 'ज्ज'वर्णस्य स्थाने च्च इत्यादेशो भवति। सयुक्तत्वात् 'वर्गाणा'मिति सूत्रेणाप्राप्तस्य विधानम्। कार्यम् = कच्च ॥ ११ ॥

**ज्ञेति। शौरसेनीनियम से साधित 'ज्ज' के स्थान पर 'च्च' यह आदेश होता है। कार्यम् = 'र्यशय्याभिमन्युषु ज' इससे र्य के स्थान पर ज, 'शेषादे०' से द्वित्व होने पर 'ह्रस्व संयोगे' से ह्रस्व करने पर 'कज्ज' इस दशा में प्रकृत से 'ज्ज' को 'च्च', 'सोर्बिन्दुर्नपुंसके' से बिन्दु, 'कच्च' यह रूप पैशाची मे सिद्ध होता है ॥ ११ ॥**

## राज्ञो राचि टाङसिङस्ङिषु वा ॥ १२ ॥

**राजन्-शब्दस्य टा, ङसि, ङस्, ङि-इत्येतेषु परतो राचि इत्ययमादेशो वा भवति। राचीना ( ५-४१ टा = णा कृते, १०-५ णा = ना[2], शे० स्प० )। रञ्ञा ( राज्ञा अत्र १०-९ ज्ञा = ञ्ञा, ह्रस्वः संयोग इति ह्रस्व, एवमग्रेऽपि )। राचिनो ( ५-३८ ङसि, ङस् = णो[3], १०-५ णो = नो )। रञ्ञो। राचिनि, रञ्ञि। (राचि=ङि ५-२८ ङि=णो, शे० पू०)। राज्ञः। राज्ञि। एतेष्विति किम्? राचा। राचानं। रञ्ञो ( राजा इत्ययुक्तस्य १०-३ सू० जा = चा, एवं राजानं = राचानं। राज्ञः १०-९ ज्ञ = ञ्ञ ) ॥ १२ ॥**

राज्ञो राचि टा-ङसि-ङस्-ङिषु वा—राजन्-शब्दस्य टा-ङसि ङस् ङिषु परेषु 'राचि'- इत्ययमादेशो विकल्पेन भवति। टा-राचिना, रञ्ञा = राज्ञा। ङसिङसो – राचिनो, रञ्ञो = राज्ञ, पञ्चमीषष्ठयो। ङौ-राचिनि, रञ्ञि = राज्ञि। पूर्वोक्तास्वेव विभक्तिषु इति किम्? सौ-राचा, अमि-राचान-इत्यत्रापि स्यात, न च भवति ॥ १२ ॥

**राज्ञ इति। टा-ङसि-ङस ङि इन पर रहते राजन् शब्द को राचि यह आदेश विकल्प से होता है। टा, राचिना-राजन्शब्द से टा पर रहते प्रकृत सूत्र से राचि आदेश, 'टा णा' ५-४१ से टा को णा, 'णो न' १० ५ से ण को न, राचिना। राचि आदेश के अभाव पक्ष में 'ज्ञस्य ञ्ञ' १० ९ से ञ्ञ आदेश, 'ह्रस्व सयोगे' से ह्रस्व, रञ्ञा = राज्ञा। इसी प्रकार ङसि तथा ङस् पर रहते प्रकृत से राचि आदेश, 'जश्शसङस्रां णो' ५ ३८ में 'ङस्' मे ङसि, ङस् दोनों का ग्रहण होने से पञ्चमी तथा षष्ठी दोनों विभक्तियों में ङसि-ङस् को णो आदेश, 'णो न' १०-५ से ण को न, राचिनो। अभावपक्ष में–'ज्ञस्य०' १०-९ से ञ्ञ आदेश, 'ह्रस्व संयोगे' से ह्रस्व, रञ्ञो = राज्ञ'। एव ङि = सप्तमी के एक वचन में–इससे राचि आदेश, 'जश्शस०' ५-३८ से णो, ण को नत्व, ह्रस्व, राचिनि।**

---

[1] ३-१७ प्रतिपादितस्येत्यर्थः। तत्र ज्ज इति पाठान्तर दृश्यते। प्राकृतस्य शौरसेनी-व्यवहारस्य प्रायशो दर्शनाच्च। [2] लाक्षणिकस्याऽपीति साम्प्रदायिका। [3] तत्र ङस्ग्रहणान्ङसेरपि ग्रहणम्।

यथान्तर में-रञ्जि = राञ्जि । सिद्धि पूर्ववत् । टा-ङसि-ङस्-ङि पर रहते ही राचि आदेश क्यों ? ऐसा न कहेंगे तो-राचा, राचानं इत्यादि में भी होगा, परन्तु होता नहीं ॥ १२ ॥

## क्त्वस्तूनं ॥ १३ ॥

**क्त्वाप्रत्ययस्य स्थाने तूनं इत्ययमादेशो भवति । दातूनं ( दाधातोः क्त्वास्थाने तूनमादेश. ) । कातूनं ( ८ १७ कृञ् = का, शे० पू० ) । घेत्तूनं ( ८ १६ ग्रह = घेत् , शे० स्प० ) ॥ १३ ॥**

क्त्वस्तूनं—पैशाचीभाषायां क्त्वा-प्रत्ययस्य स्थाने तून-इत्यादेशो भवति । दातून । कातून । घेत्तून ॥ १३ ॥

क्त्व इति । पैशाची में क्त्वा-प्रत्यय के स्थान पर तून यह आदेश होता है। (दत्त्वा) दा धातु से क्त्वाप्रत्यय, प्रकृत से तूनं आदेश, दातून । ( कृत्वा ) कृञ् धातु से क्त्वा, प्रकृत से क्त्वा को तूनं, 'कृञ' का०' ८-१७ से कृ को का, कातून । ( गृहीत्वा ) ग्रह धातु से क्त्वा, इससे क्त्वा को तून, 'घेत् क्त्वातुमुन्तव्येषु' ८-१६ से ग्रह को घेत् आदेश, घेत्तूनं ॥ १३ ॥

## हृदयस्य हितअकं ॥ १४ ॥

इति श्रीवररुचिकृतेषु प्राकृतसूत्रेषु दशम परिच्छेद ।

**हृदयशब्दस्य हितअकं निपात्यते । हितअकं हरसि मे तलुनि ( १-२७ ऋ = अ, ७-२ थास् , सिप् = सि । मे तत्समः, तुलनि ५ २९ ह्रस्वः, शे० १०-५ सू० स्प० ) ॥ १४ ॥**

इति श्रीभामहकृताया मनोरमाव्याख्यायां पैशाचिको नाम दशमः परिच्छेद[1] ॥

---

[1] ज्ञो ञ्ञ पैशाच्याम् ८।४।३०६ । अभिमञ्ञू । पुञ्ञकम्मो । पुञ्ञाह । कञ्ञका । लो ल ८।४।३०८ । ळकारस्य लकार एव । मील । कुल । सलिल । न कगजादिषट्स मम्यन्तसूत्रोक्तम् ८।४।३२४ । इति सूत्रेण प्रायो द्वितीयपरिच्छेदस्थकार्याभावोऽत्र ज्ञेय । यथा—सुमुमा । क्वचित्तृतीयस्यापि । तेन भगवती पञ्वतीत्यादौ न तलोप । पताका, वेतसो-इत्याद्यपि च सिद्ध्यति । तथा च मकरकेतू-सगरपुत्तवचन-'विजयसेनेन लपित'-मित्यादि सङ्गच्छते । शषो सस्तु भवति, 'शषो स' ८।४।३०९ । इति पुनः सूत्राऽऽरम्भाद् । हृदये यस्य प ८।४।३१० । हितपक । किंपि किंपि हितपके अत्थ चिन्तयमानी । टोस्तुर्वा ८।४।३११ । कुतुम्बक—कुडुम्बक । द्धूनत्थूनौ ष्ट्व ८।४।३१३ नद्धून—नत्थून । तद्धून । तत्थून । र्य स्न-ष्टा रिय सिन-सटा क्वचित् । ८।४।३१४ । यथासख्यम् । भार्या = भारिया । स्नातम् = सिनातम् । कष्टम् = कसटम् । क्वचिदिति किम् ? सुज्जो । सुनुसा । तिट्ठो-इत्यादि । सूर्यः । स्नुषा । दिष्टम् । यादृशादेर्दुस्ति ८।५।३१७ यातिसो । तातिसो । केतिसो । एतिसो । युम्हातिसो, अम्हातिसो । यादृश । तादृशः । कीदृश- । एतादृश- । युष्मादृशः । अस्मादृशः । अन्यादृशस्य तु अन्नादृशो-इति । शेष शौरसेनीवदवगन्तव्यम् । हेमस्तु पैशाचीशुद्धचूलिका-

**हृदयस्य हितअक** – हृदय-शब्दस्य स्थाने पैशाच्या हितअकं-इति निपात्यते। हृदय हरसि मे तरुणि !, हृदयम् इत्यस्य स्थाने निपातनात् हितअकं। एवं पूर्णस्य वाक्यस्य पैशाचीरूपान्तरमिदम्—हितअक हरसि मे तलुनि !-इति ॥ १४ ॥

इति श्रीहोशिङ्ग-जगन्नाथशास्त्रिकृतायां चन्द्रिकापूरण्यां प्राकृतप्रकाश-<br>व्याख्यायां पैशाचिको नाम दशमः परिच्छेदः।

हृदयस्येति। पैशाची में हृदय के स्थान पर हितअक निपातन से किया जाता है। हितअक हरसि मे तलुनि ! में 'हृदय'के स्थान पर हितअकं-ऐसा व्यवहार में आता है। हरसि में हृधातु, 'ऋतोऽत्' १-२७ से ऋ को अर, 'थास्सिपो सिसे' ७-२ से सि, मे सस्कृत सम, 'मे मम०' ६-५० से सिद्ध भी, तरुणि ! में 'णो न' १०-५ से ण को न, 'रसोर्लशौ' इस हेमसूत्र से ल, 'ईदूतो०' ५-२९ से सम्बुद्धि में ह्रस्व, तलुनि। 'हितअक हरसि मे तलुनि' इति ॥ १४ ॥

इति प्राकृतप्रकाशस्य प्रदीपाख्यसरलहिन्दीव्याख्यानस्य पूरण्यां<br>दशमः परिच्छेदः।

---

भेदेन द्विधा भित्त्वा 'वर्गाणा'मिति प्रतिपादित कार्यं चूलिकाविषयक मन्यते। पैशाच्यां दकारस्य तकारविधानार्थं 'तदोस्त' ८।४।३०७। सूत्रमेव पठितवान्। मतनपरवसो = मदनपरवश इति। अत एव पैशाच्यां सगरपुत्तवचन, भगवतीत्याद्युदाजहार। तत्र 'रस्य लो वे'ति भेदमेकमित्यु-मुदाजहार। 'उच्छलन्ति समुद्दा, सइला निपतन्ति, तं हरु नमथ'-इति। अन्यत् पूर्ववत्।

# अथैकादशः परिच्छेदः

## मागधी ॥ १ ॥

**मागधानां भाषा मागधी, लक्ष्यलक्षणाभ्यां स्फुटीक्रियते ॥ १ ॥**

मागधी—मागधानां मगधदेशवासिनां लोकानां पारस्परिकव्यवहारबुद्धा तैरुच्यमाना भाषा मागधीति संज्ञिता भवति । सा च सम्प्रति लक्ष्यलक्षणाभ्यां स्पष्टीक्रियते । परिच्छेदसमाप्ति यावत् एतत्सूत्रस्याधिकार ॥ १ ॥

मागधीति । मगध-देश-निवासियों के आपस के व्यवहार में बोली जानेवाली उनकी भाषा मागधी कहलाती है । उदाहरण एवं लक्षणों से उसे स्पष्ट करते हैं । यह परिच्छेद समाप्ति तक अधिकार सूत्र है । अतः प्रत्येक सूत्र से साधित रूप मागधी भाषा के हैं—ऐसा अर्थ समझना होगा ॥ १ ॥

## प्रकृतिः शौरसेनी ॥ २ ॥

**अस्या मागध्याः प्रकृतिः शौरसेनी[1]-इति वेदितव्यम् ॥ २ ॥**

प्रकृतिः शौरसेनी—मागधीभाषाया अपि प्रकृतिः अर्थात् मूलाश्रयवती पैशाचीवत शौरसेन्येव भाषा वर्त्तते-इति ज्ञेयम् ॥ २ ॥

प्रकृतिरिति । मागधी-भाषा की भी पैशाची-भाषा के समान प्रकृति = मूल आधार शौरसेनी भाषा ही है । शौरसेनी के नियमों से सिद्ध शब्दों में प्रकृतिप्रत्ययादि के कुछ परिवर्तन द्वारा मागधी नामक भाषा बनती है—ऐसा समझना चाहिए ॥ २ ॥

## षसोः शः ॥ ३ ॥

**षकारसकारयोः स्थाने शो भवति । माशे । विलाशे । ( स्प० ) । माषः । विलासः ॥ ३ ॥**

षसोः श.—शौरसेनीनियमानुसार सिद्धानां शब्दानां मध्ये वर्तमानयोः षकार-सकारयोः मूर्धन्यदन्त्ययोः स्थाने तालव्यः श = शकारो भवति । ( माषः ) = माशे । ( विलासः ) = विलाशे ॥ ३ ॥

षसोरिति । शौरसेनी के नियमों द्वारा साधित शब्दों में वर्तमान मूर्धन्य और दन्त्य ष-स के स्थान पर तालव्य शकार होता है । ( माषः ) प्रकृत सूत्र से 'ष' के स्थान में 'श', 'अत इदेतौ' ११-१० इससे एकार, माशे । इसी प्रकार (विलासः) का विलाशे ॥ ३ ॥

## जो यः ॥ ४ ॥

**जकारस्य यकारो भवति । यायदे ( प्रायोग्रहणात् २-२ यलोपो न, १२-२ त् = द् ) । आयते ॥ ४ ॥**

---

१. प्राकृतस्याप्यत्र ग्रहण वेदितव्यम् ।

जो यः—जकारस्य स्थाने यकारो भवति। ( जायते ) यायदे ॥ ४ ॥

ज इति। शौरसेनीसिद्ध शब्द में वर्तमान जकार के स्थान पर यकार आदेश होता है। जायते—यहाँ शब्द के आदि में वर्तमान ज को इससे य हुआ, 'कगच०' २-२ में प्रायोग्रहण से 'य' का लोप नहीं, 'अनादावयुजो०' १२ ३ से त को द, यायदे ॥ ४ ॥

## चवर्गस्य स्पष्टता तथोच्चारणः ॥ ५ ॥

चवर्गो यथास्पष्टस्तथोच्चारणो भवति। पलिचए ( रसोर्लशौ ८। ४।२८० हेम० सू० र्=ल्, २-२ यलोपः, एत्वं पूर्ववत् )। गहिदच्छले (२-२७ ऋ=अ, १२-३ त = द, शे० पू०)। वियले (११-४ ज=य, शे० पू०)। णिज्झले ( एत्वं पूर्ववत्, शे० ३-५१ सू० स्प० )। परिचयः। गृहीतच्छलः। विजलः। निर्झरः ॥ ५ ॥

चवर्गस्य स्पष्टता तथोच्चारण—चवर्गस्य यथा स्पष्टमुच्चारण स्यात्तथा तस्योच्चारण कर्तव्यम्। ( परिचय ) पलिचए। ( गृहीतच्छल )=गहिदच्छले। (विजल)= वियले। ( निर्झर ) = णिज्झले ॥ ५ ॥

चवर्गेति। चवर्ग की स्पष्टता झलकानेवाला उच्चारण इस भाषा में करना चाहिए। ( परिचय ) 'रसोर्लशौ' हेमसूत्र से ल, 'कगच०' २ २ से यलोप, 'अत इ०' ११ १० से एत्व, पलिचए। ( गृहीतच्छल ) 'ऋतोऽत्' १-२७ से ऋ को अ, 'अनादावयु०' १२ ३ से त को द, ह्रस्व, पूर्ववत् एत्व, गहिदच्छले। ( विजल ) 'जो य' ११ ४ से ज को य, पूर्ववत् एत्व, वियले। ( निर्झर ) 'सर्वत्र ल०' ३ ३ से रलोप, 'शेषादे०' ३ ५० झद्वित्व, 'वर्गेषु युज' ३ ५१ से झ को ज, 'रसोर्लशौ' हेमसूत्र से र को ल, पूर्ववत् एत्व, 'नो ण सर्वत्र' २ ४२ से नि के न को णत्व, णिज्झले ॥ ५ ॥

## हृदयस्य हडकः ॥ ६ ॥

हृदयस्य स्थाने हडको भवति। हडके आलले मम ( स्पष्ट० )। हृदये आदरो मम ॥ ६ ॥

हृदयस्य हडक—मागध्या हृदयशब्दस्य स्थाने हडक-इत्यादेशो भवति। हृदये आदरो मम = हडके आलले मम ॥ ६ ॥

हृदयेति। हृदय-शब्द के स्थान में हडक-आदेश होता है। ( हृदये ) इससे हडक आदेश, 'ङेरेम्मी' ५-९ से ए, हडके। ( आदरः ) 'अत इदेतौ०' ११-१० से एत्व, 'रसोर्लशौ' से लत्व, आलले। मम-तत्समशब्द। एवं 'हडके आलले मम' इति ॥ ६ ॥

## र्यर्जयोर्य्यः[1] ॥ ७ ॥

र्यकारर्जकारयोः स्थाने य्यो भवति। कय्ये ( संयोगे ह्रस्वः, ११-१० एत्वम् )। दुय्यणे (२-४२ न्=ण्, पूर्ववत् एत्वम्)। कार्य्यम्। दुर्जनः॥७॥

---

१ क्वचिद् ज्ज इति पाठस्तन्मते-कज्ज, दुज्जनो-इति।

र्यर्जयोर्य्यः—रकारयुक्तयोर्यकारजकारयोः र्य-र्ज इति वर्णयोः स्थाने य्य इत्यादेश स्यात्। ( कार्यम् ) र्यस्य य्यकारादेशे, 'सन्धावचा' ४–१ मन्तर्गतेन 'संयोगे ह्रस्व' इति सूत्रेण ह्रस्वे, कय्य इति जाते पूर्ववद् एत्वे, कय्ये। एवमेव दुय्यणे (दुर्जन) ॥७॥

र्येति। र्य और र्ज के स्थान में य्य आदेश हो। ( कार्यम् ) प्रकृत से र्य के स्थान में य्य, 'सन्धावचां०' ४–१ के अन्तर्गत सयोग पर रहते ह्रस्व, पूर्ववत् एत्व, कय्ये। ( दुर्जन ) प्रकृत से र्ज को य्य, 'नो ण.०' २–४२ से णत्व, पूर्ववत् एत्व, दुय्यणे ॥ ७ ॥

## क्षस्य स्कः ॥ ८ ॥

**क्षस्य स्थाने स्ककारो भवति। लस्कशे। दस्के ( पलिचप-वत् र = ल, ११–३ स=श, एत्वं माशेवत्। एवं दस्के )। राक्षसः। दक्षः ॥ ८ ॥**

क्षस्य स्कः—क्ष-इत्यक्षरस्य स्थाने स्क-इत्यादेश स्यात्। ( राक्षस ) = लस्कशे। ( दक्ष ) = दस्के। उभयत्र क्षस्य स्थाने स्कादेश। एत्वम् ॥ ८ ॥

क्षस्येति। मागधी में क्ष के स्थान पर स्क–आदेश हो। (राक्षसः) इससे क्ष को स्क, 'षसो श' ११–३ से स को श, पूर्ववत् एत्व, 'रसोर्लशौ' से ल, 'सन्धा०' ४–१ से सयोग पर रहते ह्रस्व, एत्व, लस्कशे। ( दक्ष ) प्रकृत से क्ष को स्क, पूर्ववत् एत्व, दस्के ॥ ८ ॥

## अस्मदः सौ हके-हगे-अहके ॥ ९ ॥

**अस्मदः स्थाने सौ परतो हके, हगे, अहके इत्येत आदेशा भवन्ति। हके, हगे, अहके भणामि। ( रूप० ) अहं भणामि ॥ ९ ॥**

अस्मदः सौ हके-हगे-अहके—सौ परत अस्मद स्थाने हके, हगे, अहके इति त्रय आदेशा भवन्ति। आशय—अहम्-इत्यस्य पूर्वोक्तानि त्रीणि रूपाणि भवन्तीति। ( अह भणामि ) अहम्-इत्यत्र हके, हगे, अहके भणामि ॥ ९ ॥

अस्मद् इति। अस्मद्शब्द को प्रथमैकवचन सुविभक्ति में हके, हगे, अहके ये तीन रूप होते हैं। हके, हगे, अहके=( अह ), भणामि–तस्समक्रिया। भण्धातु से 'इड्मिपोर्मि' ७–३ से मि, 'अत आ मिपि वा' ७–३० से आत्व ॥ ९ ॥

## अत इदेतौ लुक् च ॥ १० ॥

**सावित्यनुवर्तते। अकारान्ताच्छब्दात्सौ परत इकारैकारौ भवतः, पक्षे–लोपश्च। एशि (एतत्सूत्रेण इकारैकारौ। पक्षे लुप्यते, ११–३ ष=श)। लाआ (राजा इत्यत्र रसोर्लशौ इति हेम० व्याकरणानुसारं र=ल, शे० ५–३६ सू०रूप० )। एशे (एशिवत् शकारः, शे०रूप०)। पुलिशे (लाआवत् लकारः, शे० पू० )। एष राजा। एष पुरुषः ॥ १० ॥**

अत इदेतौ लुक् च—'अस्मद' सौ०' इत्यत सौ–इत्यस्यानुवृत्ति। अकारान्तात् शब्दात् सौ परत इदेतौ भवत, तत्पक्षे लोपश्च भवति। (एष राजा) = एशि लाआ। ( एष पुरुष ) = एशे पुलिशे। इत्वपक्षे–एशि–इति, एत्वपक्षे–एशे–इति। उभयत्रापि सोर्लोपः ॥ १० ॥

अत इति। इस सूत्र में पूर्व सूत्र से 'सौ' की अनुवृत्ति करते हैं तब अर्थ होता है कि अकारान्त शब्द को सु' पर रहते इ, ए होते हैं तभी सु का लोप भी होता है। (एषः) 'तदेतदोः स.०' ६–२२ से तकार को सकार, 'अन्त्यस्य हल.' ४–६ से हलोप, 'एतदः सावोत्व वा' ६–१९ से प्राप्त ओत्व को बाध कर मागधी में प्रकृत सूत्र से इत्व तथा सुलोप, एशि। एत्वपक्ष में—एशे। उभयत्र 'षसो. श.' १४–३ से शकार। (राजा) 'रसोर्लशौ' हेमसूत्र से र को ल, 'राज्ञश्च' ५–३६ से आ, 'कगचज०' २–२ से जलोप, लाआ। (पुरुषः) 'रसो.' इससे ल, 'षसो शः' ११–३ से शकार, 'इत्पुरुषे रोः' १–२३ से उकार को इकार, पूर्ववत् एत्व, पुलिशे ॥ १० ॥

## क्तान्तादुश्च ॥ ११ ॥

**क्तप्रत्ययान्ताच्छब्दात्सौ परतः उकारश्च भवति, चकारात् इदेतौ लुक् च। हशिदु, हशिदि, हशिदे, हशिद। (शकार पूर्ववत्, शे० स्प० पू०)। हसितः ॥ ११ ॥**

क्तान्तादुश्च—क्तप्रत्ययान्तात् शब्दात् सौ परत उकारो भवति, चकारादिदेतौ लुक् च। (हसित) उकारे-शत्वे लुकि च हशिदु। इत्वे–हशिदि। एत्वे–हशिदे इति त्रीणि रूपाणि ॥ ११ ॥

क्तान्तादिति। क्त प्रत्यय है अन्त में जिसके ऐसे शब्द को सु पर रहते उकार होता है। सूत्र में चग्रहण से इकार और एकार भी होते हैं और सु का लोप भी। हस् धातु से क्तप्रत्यय करने पर सिद्ध क्तप्रत्ययान्त हसित शब्द है, उसे सु पर रहते क्तप्रत्ययवाले अकार को उकार, इकार, एकार तथा लोप करने पर 'षसो' ११ ३ से स को श किया, तब हशिदु, हशिदि, हशिदे ये तीन रूप हुए ॥ ११ ॥

## ङसो हो वा दीर्घत्वं च ॥ १२ ॥

**ङसः षष्ठ्येकवचनस्य स्थाने हकारादेशो वा भवति तत्संयोगे च दीर्घत्वम्। पुलिशाह (पुलिशवत् र = ल, शकारश्च, शे० स्प०)। धणे (२–४२ न् = ण्, एत्वं माशेवत्)। पक्षे–पुलिशश्श धणे (५–८ ङस् = स्स, ११–३ स्स = श्श, शे० पू०)। पुरुषस्य धनम् ॥ १२ ॥**

ङसो हो वा दीर्घत्व च—षष्ठीविभक्तेरेकवचनस्य ङस स्थाने हकारो विकल्पेन भवति, तत्सयोगे च दीर्घत्वमपि भवति। (पुरुषस्य) पुरुष + ङस् इति स्थितौ प्रकृत–सूत्रेण वैकल्पिके हकारे, तत्सयोगे दीर्घे च कृते पुरुषाह इति जाते, हेमसूत्रेण 'रसोर्लशा'-वित्यनेन लकारे, 'इत्पुरुषे रो' १-२३ इत्यनेन रोरुकारस्य इत्वे, 'षसो' श' इति शत्वे पुलिशाह–इति सिद्धम्। पक्षान्तरे–'स्सो ङस' ५-८ इति सूत्रेण ङस' स्सकारादेशे, पूर्ववत् इत्वे, लत्वे, शकारे च कृते पुलिशश्श इति रूपं सिद्ध्यति। धनम्–णत्वे, एत्वे च धणे–इति। पुलिशाह, पुलिश्श वा धणे = पुरुषस्य धनम् ॥ १२ ॥

ङस इति । षष्ठी के एकवचन के ङस्-प्रत्यय के स्थान पर 'ह' यह आदेश विकल्प से होता है, उसी समय उसके साथ ही तत्पूर्ववर्ती स्वर को दीर्घ भी होता है । उदाहरण-पुलिशाह धणे, अथवा पुलिशश्श धणे । पुलिशाह और पुलिशश्श दोनों स्थान पर 'इत्पुरुषे रोः' से रु के उकार को इकार, 'रसोर्लशौ' से लकार । ङस् को प्रकृत सूत्र से हकारादेश के पक्ष में दीर्घ भी होने पर पुलिशाह । पक्षान्तर में-'स्सो ङसः' से ङस् को स्स करने पर ष और स्स को 'षसोः श' से शकार करने पर पुलिशश्श-इति । धनम्-को 'नो ण' से णत्व, पूर्ववत् एत्व करने पर धणे सिद्ध होता है ॥ १२ ॥

## अदीर्घः सम्बुद्धौ ॥ १३ ॥

**अदन्तादित्येव । अदन्ताच्छब्दादकारो दीर्घो भवति सम्बुद्धौ । पुलिशा आगच्छ । माणुशा ( २-५२ न-ण, ११-३ ष = श, ५-२ जसो लोपः ) आगच्छ । सम्बुद्धाविति किम् ? बम्हणश्श धणे ( ५-४७ सू० स्प०, शे० पुलिशश्शवत् ) । ब्राह्मणस्य धनम् ॥ १३ ॥**

अदीर्घ' सम्बुद्धौ—ह्रस्वाकारान्तादित्येव । अस्य दीर्घः = अदीर्घ' इति षष्ठी-तत्पुरुष । ह्रस्वाकारान्तस्य शब्दस्य अन्ते वर्तमानोऽकारो दीर्घो भवति सम्बुद्धौ । पुलिशा आगच्छ, माणुशा आगच्छ । = हे पुरुष ! आगच्छ । हे मानुष ! आगच्छ । सम्बुद्धाविति किम् ? बम्हणश्श धणे ( ब्राह्मणस्य धनम् ) ॥ १३ ॥

अदीर्घ इति । अदन्त (ह्रस्व अकारान्त) से ही । अदीर्घ. में नञ्-तत्पुरुष नहीं किन्तु 'अस्य दीर्घ ' इस प्रकार षष्ठीतत्पुरुष समास है । ह्रस्व अकारान्त शब्द के अन्तिम अकार को सम्बुद्धि पर रहते दीर्घ होता है । ह्रस्व अकारान्त पुरुष शब्द से तथा मानुष शब्द से सम्बुद्धि के सु पर रहते उभयत्र षकारोत्तरवर्ती अकार को दीर्घ अर्थात् आ हुआ तब पुरुषा, मानुषा हुआ । पूर्वोदाहरण में 'इत्पुरुषे रोः' से इत्व, 'रसोर्लशौ' से ल, 'षसोः शः' से श, पुलिशा इति । द्वितीयोदाहरण में 'णो न. सर्वत्र' से णत्व तथा 'षसोः शः' से शकार, माणुशा इति । सम्बुद्धौ ऐसा क्यों कहा ? नहीं कहते तो षष्ठी में 'बम्ह-णश्श' यहाँ पर भी दीर्घ प्राप्त हो जाता । यहाँ सम्बुद्धि न होने से दीर्घ नहीं हुआ ॥

## चिट्ठस्य चिष्ठः ॥ १४ ॥

**चिट्ठस्य'[1] स्थाने चिष्ठ इत्ययमादेशो भवति । पुलिशे चिष्ठदि । ( पु-लिशे व्याख्यातः, १२-१६ चिट्ठस्य चिष्ठः, १२-३ ति=दि ) । पुरुषस्तिष्ठति ॥१४॥**

चिट्ठस्य चिष्ठः—वक्ष्यमाणेन 'स्थश्चिट्ठ' १२-१६ इति सूत्रेण साधितस्य चिट्ठ-इत्यस्य स्थाने चिष्ठ इत्यादेशो भवति । पुलिशे चिष्ठदि = पुरुषस्तिष्ठति । चिष्ठदि-स्थाधातो शौरसेन्यां साधितस्य चिट्ठस्य स्थानेऽनेन चिष्ठादेशे 'अनादा०' १२-३ इति सूत्रेण तीत्यस्य तकारस्य दकारः, चिष्ठदि ॥ १४ ॥

---

[1] 'स्थश्चिट्ठ' इति साधितस्येत्यर्थः ।

चिट्ठेत्ति। शौरसेनी-भाषा नियम के द्वारा साधित 'चिट्ठ' के स्थान में चिष्ठ आदेश होता है। पुलिशे चिष्ठदि=(पुरुषस्तिष्ठति) में पुलिशे की सिद्धि पूर्व में कही जा चुकी है। स्था धातु से वर्तमानकालिकप्रत्ययादेश ति करने पर वक्ष्यमाण 'स्थश्चिट्ठः' सूत्र से चिट्ठ होने पर प्रकृत से चिट्ठ को चिष्ठ, 'अनादावयुजोः' से तकार को दकार, चिष्ठदि॥

## कृञ्मृङ्गमां क्तस्य डः ॥ १५ ॥

डुकृञ् करणे, मृङ् प्राणत्यागे, गम्लृ गतौ एतेषां क्तप्रत्ययस्य स्थाने डकारो भवति। कडे। मडे। गडे ( १-२७ ऋ = अ, एत्वं, सोर्लोपश्च मागधवत्, शे० स्प० )। कृतः। मृतः। गतः॥ १५॥

कृञ्-मृङ्-गमां क्तस्य ड'—डुकृञ् करणे, मृङ् प्राणत्यागे, गम्लृ गतौ-एषां धातूनां परत कृतस्य क्तप्रत्ययस्य स्थाने डकारो भवति। ( कृत ) = कडे। (मृत )= मडे। ( गत ) = गडे॥ १५॥

कृञिति। कृञ् धातु, मृङ् धातु तथा गम् धातु से विहित क्तप्रत्यय के स्थान पर 'ड' यह आदेश होता है। कृतः-'ऋतोऽत्' १-२७ से ऋ को अ, प्रकृत से ड, पूर्ववत् प्रथमैक वचन में एत्व, सुलोप, कडे। मृत =में कृतः के समान सब कार्य, मडे। गतः-उक्त सूत्र से ड, एत्व, सुलोप, गडे॥ १५॥

## क्त्वो दाणिः ॥ १६ ॥

क्त्वाप्रत्ययस्य स्थाने दाणि इत्ययमादेशो भवति। शहिदाणि गडे ( ११-३ स = श, ७-३३ इत्वं, शे० स्प० )। करिदाणि ( १२-१५ कृञ्= कर, इकारः, पू० शे० स्प० )। आअडे (२-२ गलोपः, शे० पू०)। सोढ्वा गतः। कृत्वाऽऽगतः॥ १६॥

क्त्वो दाणि —धातोर्विहितस्य क्त्वाप्रत्ययस्य स्थाने दाणि-इत्येष आदेशः स्यात्। शहिदाणि गडे = सोढ्वा गत। करिदाणि आअडे = कृत्वा आगत। षह मर्षणे-इत्यस्मात् क्त्वाप्रत्यये सूत्रेणानेन दाणि आदेश, शहिदाणि। डुकृञ् करणे धातो विहितस्य क्त्वाप्रत्ययस्य दाणि-इत्यादेश, करिदाणि॥ १६॥

क्त्व इति। क्त्वाप्रत्यय के स्थान में मागधी भाषा में दाणि आदेश हो। षह् मर्षणे से क्त्वाप्रत्यय करने पर 'षसो' शः' से श, 'इ च क्त्वा०' ७-३३ से चकारात् इ, प्रकृत से दाणि आदेश, शहिदाणि = सोढ्वा। गडे-गतः पूर्व सूत्र में स्पष्ट किया गया है। करिदाणि = कृत्वा, कृधातु से क्त्वाप्रत्यय करने पर कृ + त्वा, 'डुकृञः करः' १२-१५ वक्ष्यमाण से कर, ७-३३ से इ, प्रकृत से दाणि, करिदाणि। आङ्पूर्वक गम् धातु से क्त-प्रत्यय, आ + ग + त इस स्थिति में 'कगच०' २-२ से गलोप, 'कृञ्-मृङ्-गमां क्तस्य डः' ११-१५ से ड, एत्व-सुलोप आअडे॥ १६॥

## शृगालशब्दस्य शिआलाशिआलकाः ॥ १७ ॥

इति श्रीवररुचिकृतेषु सूत्रेष्वेकादशः परिच्छेदः ।

**शृगालशब्दस्य स्थाने शिआलादय आदेशा भवन्ति । शिआले आअच्छदि । शिआलके आअच्छदि (आङ्पूर्वक-गमेः २-६ गलोपः, १२ । स्प० ) । शृगाल आगच्छति ॥ १७ ॥**

इति श्रीभामहविरचिते प्राकृतप्रकाशस्य मनोरमाव्याख्याने
मागध्याख्य एकादश परिच्छेदः ।[1]

शृगालशब्दस्य शिआलाशिआलका'—शृगाल-इतिशब्दस्य स्थाने शिआल, शिआलक इत्यादेशौ भवत । शृगाल आगच्छति-इत्यत्र शृगालस्य स्थाने शिआल-इत्यादेशे, एत्वे सुलोपे च शिआले-इति । शिआलक-इत्यादेशपक्षेऽपि एत्वसुलोपयो कृतयो शिआलके-इति । आङ्पूर्वस्य गमे' वर्तमाने तिप्रत्यये आ + गच्छ + ति-इत्यत्र 'कगच०' इत्यादिना गलोप', 'अनादावयुजो' इति तस्य दकारे, आअच्छदि ॥

इति श्रीजगन्नाथशास्त्रिहोशिङ्गकृतायां चन्द्रिकापूर्ण्यां
मागध एकादश परिच्छेद' समाप्त ।

---

१ अत एत् सौ पुसि मागध्याम् ८।१।२८७। मागध्यां भाषायां सौ परे अकारस्य एकारो भवति पुंलिङ्गे । एष मेष । एशे मेशे । एष पुरुष' । एशे पुलिशे । करोमि भदन्त । करेमि भन्ते । अत इति किम् ? गिही । कली । गिली । पुसीति किम् ? जलम् । [ रसोर्लशौ ] र, नले । कले स, दशे । उभयो । शालशे । पुलिशे ।

सषो सयोगे सोऽग्रीष्मे ८।४।२८९ । मागध्या सकारषकारयो' सयोगे वर्तमानयो' सो भवति, ग्रीष्मशब्दे तु न भवति । ऊर्ध्वलोपाद्यपवाद. । स-पस्खलदि हस्ती । बुहस्पदी । मस्कली । ष-सुस्कदालु । कस्ट । विस्नु । शस्पकवले । उस्मा । निस्फल । धनुस्खण्ड । अग्रीष्म इति किम् ? गिम्हवाशले ।

ट्टष्ठयो' स्टः ८।४।२९० । द्विरुक्तस्य टस्य षकाराक्रान्तस्य च ठकारस्य मागध्यां सकाराक्रान्तः टकारो भवति । ट्ट भस्टालिका । भस्टिणी । ष्ठ शुस्ठु कद । कोस्टागाल ।

स्थर्थयोस्त' ८।४।२९१ । स्थ-र्थ-इत्येतयोः स्थाने मागध्यां सकाराक्रान्तस्तो भवति । स्थ-उवस्तिदे । शुस्तिदे । र्थ अस्तवदी । शस्तवाहे ।

जद्यर्या यः ८।४।२९२ । मागध्यां ज द्य र्यां स्थाने यो भवति । ज-यणवदे । द्य-मय्यं । अय्य किल विय्याहले आगदे । यस्य यत्वविधानम् आदेर्यो जः ८।१।२४५ । इति बाधनार्थम् ।

शृगालेति । शृगालशब्द के स्थान में शिआल, शिआलक—ये दो आदेश मागधी में होते हैं। 'शृगालः आगच्छति' में शृगाल के स्थान में शिआल किंवा शिआलक आदेश करने पर पूर्ववत् एत्व तथा सुलोप, शिआले, शिआलके—ये दो रूप होते हैं। आगच्छति में आङ्पूर्वक गम् धातु से वर्तमानकालिक लादेश ति करने पर 'कगचज०' २-६ से गलोप, 'अनादावयुजोः' १२-१ से ति को दि, आअच्छदि। एवं-शृगाल आगच्छति—यह सिद्ध हुआ ॥ १७ ॥

इति प्राकृतप्रकाशस्य प्रदीपाख्ये हिन्दीसरलव्याख्याने
एकादश. परिच्छेदः समाप्त ।

---

व्रजो ञ ८।४।२९४। मागध्या व्रजेजकारस्य ञा भवति । यापवाद. । वञति ।

छस्य श्चोऽनादौ ८।४।२९५। मागध्यामनादौ वर्तमानस्य छस्य तालव्यशकाराक्रान्तश्चो भवति गश्च। पिश्चिले। पुश्चदि। लाक्षणिकस्यापि आपन्नवत्सल । अवन्नवश्चले। तिर्यक्-तिरिच्छि। तिरिश्चि। अनादाविति किम् ? छाले ।

स्क प्रेक्षाचक्षो. ८।४।२९७। मागध्यां प्रेक्षेराचक्षेश्च क्षस्य सकाराक्रान्त. को भवति। जिह्वामूलीयापवाद । पेस्कदि। आचस्कदि ।

अवर्णाद्वा ङसो डाह । ८।४।२९९। मागध्यामवर्णात्परस्य ङसो डित् आह इत्यादेशो वा भवति। हगे न एलिशाह कम्माह काली। पक्षे—हिडिम्बाए घडुक्कय शोके ण उवशमदि ।

आमो डाहँ वा ८।४।३००। मागध्यामवर्णात्परस्य आमोऽनुनासिकान्तो डित् आहादेशो वा भवति। शय्यणाहँ सुह। पक्षे-नलिन्दाण। व्यत्ययात्प्राकृतेऽपि ताहँ। तुम्हाहँ। अम्हाहँ। सरिआह। कम्माह ।

अहंवयमोर्हगे ८।४।३०१। मागध्यामहंवयमोः स्थाने हगे इत्यादेशो भवति। हगे शक्कावदालतित्तणिवाशी धीवके। हगे शम्पत्ती। शेष शौरसेनीवत् । इति हेमः ।

# अथ द्वादशः परिच्छेदः

## शौरसेनी[1] ॥ १ ॥

**शूरसेनानां भाषा शौरसेनी। सा च लक्ष्यलक्षणाभ्यां स्फुटीक्रियते-इति वेदितव्यम्। अधिकारसूत्रमेतदापरिच्छेदसमाप्तेः ॥ १ ॥**

शौरसेनी—शूरसेनदेशोद्भवै पुरुषै परस्पर व्यवह्रियमाणा शूरसेनानां भाषा शौरसेनीति निगद्यते। सा च लक्षणोदाहरणै स्पष्टता नीयते-इत्यवगन्तव्यम्। आ परिच्छेदसमाप्तेरिदमधिकारसूत्रम्। इद सूत्र प्रत्येकस्मिन् सूत्रे स्वाधिकारेण प्रविश्य त्वया क्रियमाण कार्यं शौरसेनीसञ्ज्ञक स्यादिति बोधयति ॥ १ ॥

शौरसेनीति। शूरसेन-नामक देशवासियों की आपस की बोलचाल की भाषा को शौरसेनी कहते हैं। उस शौरसेनी को लक्षणों तथा उदाहरणों द्वारा स्पष्ट करते हैं। परिच्छेद-समाप्ति तक अधिकार-सूत्र होने के कारण निम्नाङ्कित सूत्रों द्वारा साधित रूप शौरसेनी के कहे जायँगे ॥ १ ॥

## प्रकृतिः संस्कृतम् ॥ २ ॥

**शौरसेन्यां ये शब्दास्तेषां प्रकृतिः संस्कृतम् ॥ २ ॥**

प्रकृतिः सस्कृतम्—शौरसेनीभाषाया वर्तमानाना शब्दाना प्रकृतिः प्रधानं मुख्यमवलम्बनं संस्कृत गीर्वाणानां वाण्येव-इति ज्ञेयम् ॥ २ ॥

प्रकृतिरिति। शौरसेनीनियमों से सिद्ध शब्दों की मूल प्रकृति संस्कृत ही है ॥ २ ॥

## अनादावयुजोस्तथयोर्दधौ[2] ॥ ३ ॥

**अनादौ वर्तमानयोरसंयुक्तयोस्तथयोर्दधौ भवतः। तस्य-मारुदिना मन्तिदो (त = द, शौ० संस्कृतवत्, ३-३ रलोपः, ५-१ ओ) थस्य-करेध (१२-१५ कृञ्=कर, ७-३४ एत्वम्)। तधा (स्प०)। असंयुक्तयोरित्येव। तेन अज्जउत्त-हला सउन्तले, इत्यादौ न। अनादाविति किम्? तस्स। मारुतिना मन्त्रितः। कुरुथ। तथा। आर्यपुत्र-हला शकुन्तले। तस्य ॥३॥**

अनादावयुजोस्तथयोर्दधा—आदाववर्तमानयोरसयुक्तयोः तकारथकारयोः स्थाने क्रमेण दकारधकारौ भवत। तस्योदाहरणं, 'मारुदिना मन्तिदो'=मारुतिना मन्त्रित।

---

१ अस्मिन् परिच्छेदे सर्वत्र वृत्त्यनुपलब्धिर्वर्तते। तत्र मया यथामति भामहानुसृता शैली मवलम्ब्य वृत्तिर्वितन्यते। २ अधिकारोऽयम्। अत्र केचिद् 'अनादावयुजः' अनादौ वर्तमाना वर्णा. सर्वे असयुक्ता. प्रयोक्तव्याः। कसणो। पणय। कृष्णः। पण्यम्। इति। ततः 'तथयोर्दधौ' इति च छेदेन व्याख्यातवन्तः। का० पा०।

थस्य-करेध = कुरुथ । तधा = तथा । असयुक्तयोरित्येव, तेनेह न—'अज्जउत्त, हला सउन्तले' आर्यपुत्र-हला शकुन्तले ! अनादाविति किम् ? तस्स, आदिस्थत्वान्नात्र ॥३॥

अनादाविति । आदि में अवर्तमान तथा असयुक्त त एवं थ के स्थान पर क्रम से द और ध अर्थात् त को द् और थ को ध होते हैं। त का, मारुतिना-सस्कृतप्रकृतिसिद्ध मारुतिना में त को द होने से, मारुदिना । मन्त्रित —'सर्वत्र लवराम्' ३-३ से रलोप, प्रकृत से क्तप्रत्ययावयव त को द, 'अत ओत्सो' ५-१ से ओकार, मन्तिदो । थ का, कुरुथ-कृञ् धातु को 'डुकृञ. कर.' १२-१५ से कर, 'लादेशे वा' ६-३४ से एत्व, प्रकृत से थ को ध, करेध । तथा में प्रकृत से थ को ध, तधा । सयोग-रहित त-थ होने चाहिएँ, अत एव 'अज्जउत्त' = (आर्यपुत्र) में तथा 'सउन्तले' (शकुन्तले !) में सयुक्त होने से दकार नहीं हुआ । अनादौ—ऐसा क्यों कहा ? न कहते तो तस्स = (तस्य) में भी होता । होना इष्ट न होने से अनादौ कहा । अत. यहाँ आदिस्थ तकार होने से दकार नहीं हुआ ॥ ३ ॥

## व्यापृते डः ॥ ४ ॥

**व्यापृतशब्दे तस्य डो भवति । पूर्वसूत्रापवादः । वावडो ( ३ २ यलोपः, २-१५ प-व, ५-१ ओ ) । व्यापृतः ॥ ४ ॥**

व्यापृते ड —व्यापृतशब्दावयवस्य तकारस्य डकारो भवति । पूर्वसूत्रापवाद । व्यापृत —'अनादा'विति १२-३ सूत्रेण प्राप्त दकारम् अपवादत्वेन बाधित्वाऽनेन डकार, वावडो ॥ ४ ॥

व्यापृते-इति । व्यापृत के त को ड हो । 'अनादा'वित्यादि-पूर्वसूत्र का अपवाद अर्थात् बाधक सूत्र है । व्यापृत'—'अधो मनयाम्' ३-२ से व्यागत य का लोप, 'पो व.' २-१५ से व, 'ऋतोऽत्' १-२७ से ऋ को अ, प्रकृत से त को ड, 'अत ओत्सोः' ५-१से ओ, वावडो ॥

## पुत्रेऽपि क्वचित् ॥ ५ ॥

**क्वचित् पुत्रशब्देऽपि तस्य डो भवति । पुडो ( ३ ३ रलोपः ) । पक्षे-पुत्तो ( ३ ३ रलोपः, ३-५० तद्वि०, ५ १ ओ ) ॥ ५ ॥**

पुत्रेऽपि क्वचित्—क्वचिदितिपदेन विकल्पो गृह्यते । पुत्रशब्दावयवीभूतस्यापि तकारस्य विकल्पेन डकारो भवति । आदेशपक्षे—पुडो । पक्षान्तरे तु-पुत्तो । पुत्र इत्यर्थ ॥

पुत्रेऽपीति । पुत्र शब्द में भी कहीं त को ड होता है । कहीं कहने से यह भी सिद्ध होता है कि अन्यत्र नहीं भी होता अर्थात् विकल्प से होता है । पुत्रः—'सर्वत्र' ३-३ से रलोप, उक्त से ड, 'अत.' ५-१ से ओ, पुडो । पक्षान्तर में-'सर्वत्र' ३-३ से रलोप, 'शेषादेशयो०' ३-५० से तद्वित्व, 'अत ओत्' ५-१ से ओ, पुत्तो ॥ ५ ॥

## इ गृध्रसमेषु ॥ ६ ॥

**गृध्रसमेषु ऋकारस्य इर्भवति । गिद्धो ( ३-३ रलोपः, ३-१ दलोपः, ३-५० धद्वि०, ३ ५१ ध् = द्, ५ १ ओ ) । गृध्रः ॥ ६ ॥**

इ गृध्रसमेषु—गृध्रसदृशेषु ऋकारयुक्तेषु शब्देषु ऋकारस्य इकारो भवति । गृध्र.—इकारे, रलोपे, द्वित्वे च गिद्धो ॥ ६ ॥

इ-इति । गृध्रशब्द के समान शब्दों में ऋकार को इकार होता है । गृध्रः—प्रकृत से गकारोत्तरवर्ती ऋकार को इकार, 'सर्वत्र' ३-३ से रलोप, 'शेषादेश०' ३-५० से द्वित्व, 'वर्गेषु युज.०' ३-५१ से ध को द, 'अत ओत्०' ५-१ से ओ, गिद्धो ॥ ६ ॥

## ब्रह्मण्यविज्ञयज्ञकन्यकानां ण्यज्ञन्यानां ञ्जो वा ॥ ७ ॥

**एतेषां ण्यज्ञन्यानां ञ्जो वा भवति । पैशाच्यां तु नित्यमिति विशेषः । बम्हञो ( ३-३ रलोपः, ३-८ ह्रस्व विपर्ययः, ५-१ ओ ) विञो, जञो, कञा ( एते १०-९, १०-१० सूत्रयोः स्प० ) । पक्षे—बम्हण्णो, विण्णो, जण्णो, कण्णा ( ३-४४ सू० द्रष्टव्यम् ) ॥ ७ ॥**

ब्रह्मण्यविज्ञयज्ञकन्यकाना न्यज्ञन्यानां ञ्जो वा—एतेषा शब्दानां मध्ये वर्तमानाना ण्य-ज्ञ-न्य वर्णाना स्थाने ञो=अकारसहितो जकारो वा स्यात् । पैशाच्यां नित्यम्, इह तु विकल्पेनेति विशेष । ब्रह्मण्यम्—बम्हञो । विज्ञ·—विञो । यज्ञ.—जञो । कन्या—कञा । पक्षान्तरेतु क्रमश —बम्हण्णो, विण्णो, जण्णो, कण्णा—इति ॥ ७ ॥

ब्रह्मण्येति । ब्रह्मण्य, विज्ञ, यज्ञ, कन्या—शब्दों में अन्तिम ण्य, ज्ञ, न्य वर्णों के स्थान पर ञ यह आदेश विकल्प से होता है । पैशाची में नित्य और शौरसेनी में विकल्प से यही विशेषता है । ब्रह्मण्यम्—'सर्वत्र ल०' ३-३ से रलोप, 'ह्रह्लेषु' ३-८ से प्रथम मकार अनन्तर हकार ( ऊर्ध्वस्थिति ), प्राकृतत्वात् लिङ्गान्तर पुंस्त्व, 'अत ओत्' ५-१ से ओकार, बम्हञो । विज्ञः-प्रकृत सूत्र से ञ, 'अतः' ५-१ से ओ, विञो । यज्ञः-'आदे· र्यो ज' २-३१ से य को ज, प्रकृत से ज्ञ को ञ, पूर्ववत् ओत्व, जञो । कन्या—इससे ञ, कञा । वैकल्पिक आदेश होने से पक्षान्तर में तो—'ज्ञ·' ३-४४ से ण, 'शेषादेश०' ३-५० से आदेशभूत ण को द्वित्व, ओत्व पूर्ववत्, बम्हण्णो । ३-४४ से ण, पूर्ववत् द्वित्व ओत्व, विण्णो । 'आदे०' २-३१ से ज, पूर्ववत् णत्व, द्वित्व, ओत्व, जण्णो । 'अधो मनयाम्' ३-२ से यलोप, 'नो णः सर्वत्र' २-४२ से णत्व, 'शेषा०' ३-५० द्वित्व, कण्णा ॥

## सर्वज्ञेङ्गितज्ञयोर्णः ॥ ८ ॥

**एतयोः संयुक्तस्यान्त्ययोर्णो भवति । सव्वण्णो ( ३-२ रलोपः, ३-५० वणयोर्द्वि०, ५-१ ओ ) । इङ्गिअण्णो (२-२ तलोपः, शे० पूर्व०) ॥८॥**

सर्वज्ञेङ्गितज्ञयोर्णः—सर्वज्ञेङ्गितज्ञशब्दयोरन्त्यस्य ज्ञस्य ण इत्यादेशः स्यात् । सव्वण्णो सर्वज्ञ । इङ्गिअण्णो-इङ्गितज्ञ· । अनेनोभयत्र ज्ञस्य णादेशात् सिद्धि ॥ ८ ॥

सर्वज्ञेति । सर्वज्ञ और इङ्गितज्ञ शब्दों में वर्तमान ज्ञ—वर्ण के स्थान में ण आदेश हो । सर्वज्ञ.—'सर्वत्र लवराम्' ३-३ से रलोप, 'शेषादेश०' ३-५० से वद्वित्व, प्रकृत से ज्ञ को ण, पुन. 'शेषादेश०' से णद्वित्व, 'अत ओत्' ५-१ से ओत्व, सव्वण्णो । इङ्गितज्ञः—'कगचज०' २-२ से तलोप, पूर्ववत् णत्व, द्वित्व, ओत्व, इङ्गिअण्णो ॥ ८ ॥

## क्त्व इअः[1] ॥ ९ ॥

**क्त्वा इत्यस्य इअ आदेशः । भणिअ । भविअ (स्पष्टम्) । भणित्वा । भूत्वा ॥ ९ ॥**

क्त्व इअ'—क्त्वाप्रत्ययस्य स्थाने शौरसैन्याम् इअ इत्यादेश' स्यात् । भणित्वा-भण् धातो क्त्वाप्रत्यये, भण + क्त्वा इत्यत्र सूत्रेणानेन क्त्वाप्रत्ययस्य स्थाने इअ-इत्यादेशे, भणिअ । भूत्वा=भविअ ॥ ९ ॥

क्त्व इति । शौरसेनी में क्त्वाप्रत्यय के स्थान में इअ-ऐसा आदेश होता है । भण् से क्त्वा-प्रत्यय करने पर उक्त सूत्र से इअ आदेश करने पर भणिअ = भणित्वा बनता है । भू + क्त्वा-यहाँ प्रकृत सूत्र से क्त्वा को इअ करने पर भू + इअ इस दशा में गुण, अवादेश, भविअ ॥ ९ ॥

## कृगमोर्डुअः[2] ॥ १० ॥

**आभ्यां परस्य क्त्वाप्रत्ययस्य डुअ इत्यादेशः । कडुअ = कृत्वा । गडुअ = गत्वा ( स्प० ) ॥ १० ॥**

कृगमोर्डुअः—पूर्वसूत्रस्यांशिकोऽपवाद । कृ-गम्-धातुभ्यां परस्य क्त्वाप्रत्ययस्य स्थाने डुअ इत्यादेश स्यात् । कृत्वा-कृ + क्त्वा-इत्यत्र 'ऋतोऽत्' १-२७ इत्यनेन अत्वे, क्त्वाप्रत्ययस्य डुअ आदेशे, कडुअ । एवमेव-गत्वा=गडुअ ॥ १० ॥

कृगमोरिति । कृ और गम् धातु से पर क्त्वाप्रत्यय को डुअ आदेश हो । पूर्वसूत्र से सर्वत्र क्त्वा को इअ प्राप्त था, इसने कृ-गम् धातुओं में विशेष डुअ-आदेश के विधान द्वारा आंशिक बाध दिखलाया है । कृत्वा-कृ धातु से क्त्वाप्रत्यय होने पर इससे डुअ आदेश हुआ और 'ऋतोऽत्' से कृ के ऋ को अकार, कडुअ । गम् धातु से क्त्वा करने पर शौरसेनी की प्रकृति संस्कृत होने से डित्वात् धात्ववयव म का लोप, क्त्वा को प्रकृत सूत्र से डुअ, गडुअ ॥ १० ॥

## णिर्जश्शसोर्वा क्लीबे स्वरदीर्घश्च ॥ ११ ॥

**नपुंसके वा जश्शसोर्णिर्भवति, पूर्वस्य स्वरस्य दीर्घश्च । वणाणि, धणाणि = वनानि, धनानि ( २-४२ न् = ण, शे० स्प० ) ॥ ११ ॥**

णिर्जश्शसोर्वा क्लीबे स्वरदीर्घश्च—नपुसके प्रातिपदिकात् परयोर्जस्-शस्-प्रत्यययो' स्थाने णि = णि इत्यादेशो भवति, तदैव पूर्वस्य स्वरस्य दीर्घश्च भवति । वनानि-वनशब्दात् जसि शसि वा पूर्वोक्तसूत्रेण णित्वे दीर्घे च, 'नो ण' इति वनशब्द-घटकीभूतस्य नकारस्य च णत्वे, वणाणि । एवमेव धनानि- इत्यस्य धणाणि ॥ ११ ॥

---

१ सिद्धहेमस्तु-क्त्व इयदूणौ ८।४।२८१ । भवत । भविय । भोदूण । हविय । होदूण । पठिय । पठिदूण । रमिय । रन्दूण । पक्षे-भोत्ता । होत्ता । पठित्ता । रन्ता-इति । ता अह्न बम्हणो भविअ दाणि भवन्त सीसेण पडिअ विण्णेमि । तदह ब्राह्मणो भूत्वेदानीं भवन्त शीर्षेण पतित्वा विज्ञापयामि ।

२ कृगमोर्डडुअ ८।४।२७२ । कडुअ । गडुअ । पक्षे-करिय, करिदूण । गच्छिय, गच्छिदूण ।

